देव्यास्सिंहं द्विरदवक्त्रो मार्ष्टि चाखुं स्ववाहं
स्कन्दो यस्मिन् विहरति गिरौ बर्हिणा बालभावात्
नन्दी यस्मिन् हरहृतमना वप्रलीलां तनोति
शंभुस्साम्बो वसति सततं यत्र सोयं महाद्रिः ॥

# ॥ शिंजिनीयम् ॥

# ŚINJINĪYAM

रचयिता :-

अ. सी. सुब्बुकृष्णश्रौती, B.A. (Hons.)

वेदभाष्यरत्नम्

*AUTHOR* :

**A.S. SUBBUKRISHNA SROWTHY, B.A. (Hons.)**

**Veda Bhashyaratnam**

***PUBLISHED BY :***

**A. S. PAVAKI SRINIVASAN, M.Com., B.Ed.**

**MADRAS - 600 041.**

## PUBLIHER'S NOTE

I have great pleasure in publishing the Sanskrit drama "SINJINIYAM" authored by my father. He has been working at this drama for the past several years. Inspite of our best efforts, some mistakes still remain. Readers are requested to correct the book with the help of errata given at the end, before they commence reading the book. Suggestions for the improvement of the book are quite welcome, which would be incorporated in the next edition.

A.S. PAVAKI SRINIVASAN, M.Com., B.Ed.
Publisher (Madras)

## ACKNOWLEDGEMENT

This book is printed with the Financial Assistance given by Sri Venkata Charities, 283, Mowbrays Road, Madras - 18 and my thanks are due to them.

My thanks are also due to the following friends, who have donated towards cost of the paper for printing the book.

1. Smt. Angalika Sriram and Shree Shriram. Thiruvanmiyur, (Now in West Germany.)
2. Dr. Renganayaki Iyengar, Thiruvanmiyur
3. Mr. J. Vaidyanatha Iyer, Adayar,
4. Mr. Soora Nagamaiah Chettigaru, Madras.
5. M/s. Amra Press, Thiruvanmiyur,
6. M/s. Nagaraj & Co. Thiruvanmiyur

My thanks are due to the following scholars, who have lent their helping hand in many ways for the publication of this book.

1. Shree Balasubramaniam, Senior Accountant PAO Commerce, Madras. (Tamil Scholar).
2. Shree U : Ve, Shreevatsankacharyaswamy, Sanskrit College - Madras.

3. Shree. U-VE-D. Srinivasachari Swamy, Chromepet

4. Br. Shree - E. Balasubramania Sastrigal, Sanskrit College, Madras.

5. Mr. N. Gopalakrishnan - Indian Railways, New - Delhi.

6. Prof. Sethuraman - Retd. Professor of English Annamalai University.

7. Dr. C. R. Swaminathan M.A., Ph.D.

8. Sri T.V. Ramanathan, Advocate, Mylapore,

I should specially thank Shree - R. Ramachandran, Department of Sanskrit, Vivekananda College, Madras - 4. who was very helpful in the work of Proof - reading / correction.

I express my gratitude to Shree Kannan of M/s Anuradha Letter Prints, Mylapore for the neat execution of the Work.

I also thank Mr. M. G. Nagarajan, artist, Thiruvanmiyur, who was kind enough to prepare the picture of the Cover page.

I, also thank all others who were instrumental for the publication of the book.

— *AUTHOR*

# ॥ प्रास्ताविकम् ॥

द्रविडभाषासाहित्ये-आदिकाव्यत्वेन सुप्रसिद्धं शिलप्पतिकारम् ॥ शताब्देभ्यो भाषाकाव्यानां निकषायमाणमिदं वैश्यकुलजातं नायकमवलंब्य विरचितम् ॥ प्रायशः ब्रह्मक्षत्रवर्णजा एव संस्कृतकविभिर्नायकत्वेन स्वीकृताः ॥ भासः शूद्रकश्चेति द्वावेव वैश्यनायकमधिकृत्य दृश्यकाव्यं व्यरचयताम् ॥ शिलप्पतिकारस्य-इतिवृत्ते नायिका कण्णकी दाक्षिणात्यसंस्कृत्यनुरोधेन पातिव्रत्यधर्मस्य निदर्शनायिता विराजते ॥ उपनायिका माधवी यद्यपि वारकन्या तथापि वसन्तसेनेव नायकैकभक्ति प्रकाशयाति ॥ संस्कृतसाहित्यशास्त्ररीत्या खण्डितनायिकात्वेन परिगणनीयापि कण्णकी स्वपतिभक्तिवैभवात् खण्डितनायिका न भवति ॥ प्रायशः खण्डितनायिकासु दृश्यमानामसूयां न केवल न प्रकाशयति किंतु असूयायाः स्वचित्तेऽपि स्थानं न ददाति ॥ कालिदासेन चित्रिता धारिणी प्रौढिमाप्रयुक्तेन निजौदार्येण पत्युर्मालविकाविषयकमभिनिवेशं कथंचिन्मर्षयतीति हेतोः दक्षिणनायिकापदमेव भजते ॥ कण्णकी तु ततोऽपि श्लाघनीया यतो वेश्याप्रसक्ते नायके तद्धृदयचौर्यं कृतवत्यां कुलटायामपि सपत्न्यां लवतोऽपि असूयां-नावहति ॥ पौराणिककथासु नलायिनीमन्तरा-एतादृशी महिला न विद्यते ॥ एतादृशी पतिभक्तिः संस्कृतसाहित्ये दुर्लभैव ॥

अतः कथावस्तुनोऽस्य - इदंप्रथमतया संस्कृतसाहित्यक्षेत्रे - दृश्यकाव्यत्वेनावतारयता - मत्सुहृद्वरेण ब्रह्मश्री सुब्बुकृष्णश्रौतिना विलक्षणं प्रशंसनीयं च किंचिदासादितम् ॥ मञ्जीरसंबन्धिनीयं कथा भगवत्या देववाण्याः पदकमलयोर्मञ्जीरवद्गुञ्जायमाना सहृदयरञ्जनाय भवतीत्यत्र नास्त्यत्युक्तिलेशः ॥

"वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलः
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः"—

इति कविकुलचक्रवर्तिना ऊर्वशीसौन्दर्यवर्णनप्रसंगे यदुक्तं तद्वत् श्रौतिवर्यस्य नाटकरचनाशेमुषीविषये कस्यापि आशंका नोदेष्यति

नाटकस्यास्य परिशीलनानन्तरम् ।। वैदिका अपि सरसकाव्यनाटक-निर्माणक्षमा भवन्तीति निरूपितं ग्रन्थकर्त्रा ।।

"गुणदोषौ बुधो गृह्णन् ...... नियच्छति" इति गुणग्रहण दोषत्यागश्च बुधलक्षणत्वेनोच्यते ।। परंतु काव्यविमर्शकः न बुध इति, उभयत्र स्थालीपुलाकन्यायेन दृष्टिपातं कुर्मः ।।

दशांकके‌ऽस्मिन् दृश्यकाव्ये प्रायशः पद्यभागा विरलाः ।। गद्यभागास्तु प्रचुराः । उभावपि प्रसादगुणगुम्फिताविति प्रशंसनीयो‌ऽयमंशः ।। उचितसंदर्भेषु अस्मत्समुदायस्थितिं सूचयति कविः ।। कलावस्मिन्प्रायेण पुमांसः धर्मविमुखा वा धर्मनिन्दका वा भवन्ति ।। नारीणामेव श्रद्धया कथञ्चिद्रक्ष्यते धर्म इति श्वेतस्वामि-मुखेन द्योतयति द्वितीयें‌ऽके - यथा -

मम स्पृहा वा सम्प्रत्ययो वा तेषु श्राद्धादिषु नास्ति ।। किंतु मद्गृहिणी वल्ली-अतीव श्रद्धावती-किं कुर्याम्? नेत्रनिमीलनपूर्वकं सर्वं क्रियते–इति ।। (Page 16)

अन्यत्र वदति कविः - वारनारी नाम विलक्षणा जलूका-या-कामुकस्य सर्वस्वचूषणं करोतीति सरलया रीत्या वर्णयन् भासकविं स्मारयति :—

नूनं दोग्धा वारनारी जलूका रूपं रक्तं मांसमायुश्च वित्तम् ।। इति (Act II Verse. 1 Page 9) शिवाराधनतत्परो‌ऽयं कविः तत्र तत्र परमेश्वरे स्वादरातिशयं व्यनक्ति ।। एकत्र "कामधक्कामधुङ्नः"- इति Page 24 विरोधाभासभंग्या - जितमन्मथेनैवकामपूर्तिः कर्तुं शक्यते -इति साकूतं प्रपञ्चितम् ।।

किंच " वित्तस्य हर्ता भुवि तस्करो जनः
प्राणस्य हर्ता किल भास्वतः सुतः ।।
वैद्यस्तु हर्ता खलु वित्तजीविते
मानं च ताभ्यां सह पुत्रिकापतिः"

(Act. V Verse 7 Page 51)

इत्यादिस्थलेषु नीलकण्ठदीक्षितस्य चाटूक्तिशैलीमनत्यासं स्वायत्तीकुर्वन् कविरयं नाटकस्य रङ्गप्रयोगयोग्यतां पुष्णाति ।।

योगिभ्यो भीतिमापन्नः... (Act. II Verse 15 P. 17) इति सन्ध्यावर्णने "यस्मान्नोद्विजते लोकः"-इति भगवदुक्तं योगिलक्षणं नाङ्गीकृतमिव भाति ।।

"निद्रामुद्रां निखिलजगतीरक्षणे जागरूका"मिति-शेषशायिनो वर्णनं मनसि कृत्वा रजताद्रिवासीशिवः - स्वपन्नपि सर्वकर्मसाक्षीति वर्णयता (Act. VII Verse. 1 Page 58) कविना हरिहरयोरभेदत्वं-अङ्गीकृतमिति मन्तव्यम् ।।

देशीयसूक्तीनां संस्कृतीकरणे पाटवं प्रदर्शयति लेखकः ।। तत्र तत्र द्राविडभाषानभिज्ञानां कृते दुरूहं भवति भाषान्तरणम् ।। विरलेषु-एतादृशस्थलेषु पौरोभाग्यावकाशे सत्यपि "चलतः स्खलनं"- इति न्यायेन, गुणप्राचुर्येण च तिरोहिता एव दोषाः ।।

संस्कृतपरम्परायां-अशुभावसतिर्मा भूदिति विचार्य नायकयोः स्वर्गलोके पुनस्सङ्गमं चिन्तयता कविना स्वप्रतिभातिशयः-शास्त्रमर्यादायामादरश्च प्रकटितः ।।

सर्वैः संस्कृताभिमानिभिःविशेषेण द्रविडसाहित्यपरिचय प्राप्सुभिरुत्तिरभरारतवासिभिः - सशिरःकम्पं सुस्वागतं व्याहर्तुमर्हति कृतिरियमित्यत्र नास्ति संशीतिकणिका ।।

मन्दोऽप्ययं जनः ज्ञानवृद्धेन श्रीसुब्बुकृष्णार्येणाऽऽमुखलेखनायादिष्ट इत्येतत् तस्य सौहार्दस्य निदानं न पुनरस्य जनस्यार्हतायाः ।। अचिरादेव नाटकमञ्चेषु-अस्य प्रयोगो भवेदित्याशासे ।। महालेखक-कार्यालये आजीविकायै कार्यं कुर्वन्नपि संस्कृतसाहित्यसेवायां बद्धादरोऽयं कविः विशेषेण साधुवादार्हः ।।

इतिशम् ।।

डा० सी. आर्. स्वामिनाथः
(कार्यकारोपाह्वः)
मद्रपुरी

# INTRODUCTION

The present Sanskrit Drama, "ŚINJINĪYAM" (The Story of the Anklet) is based upon the Tamil epic poem 'SILAPPADHIKĀRAM' written by the great poet-saint ELAṆGO ADIGAL (of 2nd Century A.D.). The original Tamil work is in three parts, viz.

(i) PUGAR KĀṆḌAM

(ii) MATHURAI KĀṆḌAM

(iii) VANCHI KĀṆḌAM

All the three parts are named after the capitals of Chola, Pāṇḍya and Chera Kingdoms respectively. The main story comes to a close with the second part and the third part is only a narrative one. We have taken the story portion only.

It should be borne in mind that it is not a translation of the original work. Only the main story has been taken for dramatisation. We have introduced some minor deviations from the original story for the sake of development of character and also for the sake of suitability for the stage. This is what happens to any story when it is adapted for the stage e.g. Śākuntalam, Ratnāvali, Plays on Ramayana etc. We have introduced some new characters also.

We have followed the traditional method of presenting Drama. So we have Nāndī, Viṣkambha etc. in the present drama. But we have not strictly followed all the conditions laid down by Bharata. The use of Prākṛt has been avoided for obvious reasons. So it can be called a modern Sanskrit Drama, following as closely as possible the traditional / conventional aspects of the Classical Sanskrit Drama. It ends with 'BHARATAVĀKYAM' in traditional form :

The Drama is named after the anklet 'ŚINJINI', since the entire story is woven around the anklet of the heroine. The word ŚINJINI in Sanskrit means an anklet ; vide :-

1) HEMACHANDRA.

1. सा श्रृङ्खलं पुंस्कटिस्था किंकिणी क्षुद्रघण्टिका ।। नूपुरं तु तुला कोटिः पादतः कनकाङ्गदे ।। मञ्जीरं हंसकं शिञ्जिनी.........

—श्लो 300 Chapter 3 मर्त्यकाण्ड

2. शब्दकल्पद्रुम - Volume V Page 72

शिञ्जिनी-धनुर्गुण इत्यमरः.नूपुर इति हेमचन्द्रः ।।

The original story viz. SILAPPADHIKĀRAM (of Elango) is also named after the 'SILAMBU' (anklet). The end of the story is altered to suit Sanskrit stage. For there is no place for tragedy in Sanskrit Dramas. The original story is a combination of Hinduism and Jainism. We have however presented the play as one based on Hindu thought and vision of life. The Jain thought has been left out. Otherwise it would have become unwieldy and there would have been many more characters, and we cannot have too many characters in Sanskrit Drama.

We have undertaken this work not with a view to filling up any vaccum in Sanskrit literature of modern days. For, we have good number of Standard Sanskrit works of various authors even in these modern days. Any new work which is not totally absurd is not a fifth wheel in the coach of any literature.

It is with this idea that we have undertaken this work and it is for the SAHṚDAYA to adjudge whether it is good or bad. We would like to quote KĀLIDASA, in this context.

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ।।

इति शाम्

— *A. S. SUBBUKRISHNAN*

## About the Characters of the Drama
### ( Who is Who )

### (DRAMA - TIS PER - SONAE)

| | | |
|---|---|---|
| 1. Govala* | — | Hero |
| 2. Kaṇṇaki | — | Heroine |
| 3. Mādhavī | — | Dancer in the City |
| 4. Mahāsādhu | — | Father of the Hero |
| 5. Mahānāyaka | — | Father of the Heroine |
| 6. Swetaswāmī | — | A friend of the Hero |
| 7. Vallī | — | Wife of Swetaswāmī |
| 8. Māṭhara yajwā | — | A Brahmin |
| 9. Madhugrīva | — | A servant in the hero's house |
| 10. Śambhu Śarmā | — | The manager of Hero's household. |
| 11. Vasantamālā | — | Servant maid of Mādhavī |
| 12. Devantikā | — | A friend of Kaṇṇaki |
| 13. Old Man | — | Some unknown person whom Govala protects from the elephant. |
| 14. Raja Śekhara | — | A teacher of Mādhavī |
| 15. Goldsmith | — | Whom Govala mistakes to be a good person and gives the anklet. |

---

* In Tamil the hero's name is pronounced as Kovala by some and Govala by a few others. We have chosen the latter.

*Note :* 1. The characters appearing in the Introduction of Drama, are well known ones as they appear in all Sanskrit Dramas.

16. Pāndya King, Minister of King, Queen of the King } Well known characters

17. A Brahmin — Fire god appearing in the form of a Brahmin.

---

2. All the characters appearing in the last Act, (other than Govala, Kannaki, the King of Pandya & his Queen) are all well known divine characters (viz. Nārada, Indra, Bṛhaspaty, Pāṇini etc.)
3. Characters 6, 7, 9, 10 & 14 are newly introduced
4. Character 8 is in the original work. But he is developed into a major character with a different role.
5. There are a few moxe minor characters like Kings' orderly and the police guards (8th Act) and public folk discussing the latest news of the city. (9th Act)-

# SYNOPSIS

## ACT - I

The drama begins with NĀNDĪ in the traditional form, with a prayer in praise of TRUTH - a flame of Supreme - BEING that governs, Moon, Sun and the Rain, followed by the exposition in the conventional form known as PRASTĀVANA.

The theme of the play is also indicated in NĀNDĪ sloka, in a suggestive way following the tradition prevalent in most Sanskrit plays.

Then follows a conversation among three characters viz. MĀṬHARA, SWETASWĀMI, and VALLĪ which tells us the marriage between Govala and Kaṇṇaki. The poor Brahmin MĀṬHARA describes that there had been some bad omens during the celebration of the marriage indicative of the misfortunes that are to follow at a later stage.

An element of humour has also been introduced in the conversation.

The Act comes to a close with the invocation to Lord Siva, by the temple priest, indicating mid-day offering to Lord Siva.

## ACT - II

The Act begins with a an interlude VISKAMBHA where we see Mahānāyaka, father of Kaṇṇaki and Mahāsādhu, father of Govala in conversation with each other.

The ensuing festival of Indra is indicated in the conversation. The debut dance performance of Mādhavi that has to take place at the end of the festival is also indicated. Then follow the main events of the Act. The honeymoon of the newly wedded couple is descri bed. Govala gets an invitation for the performance of Mādhavi, through Vasantamālā. Then follows the description of the festival of Indra. There is a conversation between Govala and Swetaswāmī a little later. Govala, visits his father-in-law's house alongwith his wife and stays in his house for a few days.

During his stay there Govala, receives a call from his household manager Śambhu Śarmā and he leaves his father-in-law's house in despair. On reaching his house he understands that a ship of his, has been drowned in sea, owing to tidal waves. He laments his misfurtune for, this happens to be his second ship to be drowned within two months. Govala's financial loss together with his loneliness - he had left his wife with her father - made him gloomy and desperable. That day happens to be the day on which Mādhavi was to give her debut dance recital. Govala's friend, Swetaswāmī, meets Govala and takes him to the dance performance just for entertainment, since Govala was mush depressed and gloomy. Then follows the dance by Mādhavī and Govala gives up heart to her and never returns home. He decides to live with Mādhavi and forgets his household affairs.

## ACT - III

In this Act we are given to understand how Govala yielded to temptation and become a victim of bad ways. He has given already 1000 gold coins to Mādhavī as first gift. The life of Govala in Mādhavī's house is described in one scene. Govala sends Vasantamālā to bring all the jewels from his house. Kaṇṇaki willingly sends the jewel box containing all the jewels including those that she wore on her person except the anklets; for they had been given to a goldsmith for carrying out some minor repairs. Śambhu Śarmā takes all the jewels and hands over all of them to Govala at the house of Mādhavī. Śambhu Śarma leaves the house of Mādhavi with a heavy heart having failed in his attempts to make Govala understand the consequences of (i) living in Madhavi's house for long and (ii) gifting away all the jewels to Madhavi. Even at this stage Govala instructs his manager Śambhu Śarmā to carryout his charitable activities. On his way back, he meets Māṭhara and Śwetaswami. One memorable deed out of several noble actions of Govala is brought out through the words of Māṭhara.

There is a reference in this act to the famous story of a poor brahmin lady killing the mongoose mistaking it to be the killer of her child. In fact the mongoose has saved the child of the lady by killing a cobra which had come near the child when the lady was away to fetch water. It is described that the husband of the poor Brahmin lady refused to live with her since she was a sinner and hence she lived alone. It was Govala, who was instrumental in bringing them together by doing all the needful to free her from sins. It is an irony of the fate that such a noble man, has fallen into bad ways and remains separated from his wife. The reference to this act ennobles the character of the hero.

## ACT - IV

Act IV begins with a soliloquy of Madhugrīva which refers to the events of the story that have already taken place (i.e. hero's departure from the house and his intimacy with Madhavi). The Central event ofthe act is Devantikā's request to Kaṇṇaki to undertake a pilgrimage to a particular temple situated in a holy place.

The purpose is to make us understand that she can get back her husband. But Kaṇṇaki turns down the suggestion, with a curt reply : 'For ladies, husband is the only God'. Then follows exchange of thoughts between the two. Kaṇṇaki tries to shield her husband. She is not revealing the fact of Govalan's gifting away all the jewels to Mādhavī. At the end of the Act, Śambhu Śarmā reveals to Kaṇṇaki that Mādhavī is in the family way. Kaṇṇaki feels very happy to hear this. At this juncture, Govala sends Vasantamālā, with an old man, with an order to Śambhu Śarmā to pay some money to the poor old man accompanying Vasantamālā who has to celebrate the marriage of his grand daughter. The order is carried out and the Act comes to a close. In this Act, the noble nature of the hero and the heroine is brought out.

## ACT - V

The Act begins with a conversation between Vasanta-mālā and Swetaswāṃī ; we understand from this that Mādhavī has given birth to a female child and the christening ceremony was to take place that evening. The main event of the Act, is the naming ceremony; the child is named 'MAṆIMEKHALĀ', name of the family deity of Govala. Govala distributes money, food, dress etc. on this happy occasion to the poor and deserving people. When the function is in progress an intoxicated elephant is reported to be roaming in the streets and it comes near Mādhavī's house. Govala, suddenly goes out and sees a poor brahmin being lifted by the elephant. Govala, releases the Brahmin from the clutches of death risking his own life. Govala offers his upper garment to the Brahmin for he was poorly clothed. He also gives him his ring as a gift. But the brahmin rejects both the offers, when he learns that Govala was the husband of Kaṇṇaki. For, the Brahmin feels it to be a sin to accept a gift from a person, who has forsaken his loyal wife. Govala was terribly annoyed by the rejection of his offer. At that time Swetaswami enters the stage and Govala tries to conceal the rejection of gifts by the Brahmin. Swetaswāmi makes some remarks about the Veena Teacher (viz. Raja Sekhara) of Mādhavī. Govala is greatly hurt at this and goes back to the house of Mādhavī with a heavy heart. As ill luek would have it, Rājaśekhara, whom Swetaswāmī has just then mentioned is seen with Mādhavī engaged in deep conversation. All the guests have already gone. They are alone-Rajasekhara has also presented a golden chain to the child. Govala over-hears the talk and concludes that Rajaśekhara loves Mādhavī. They are n't just student - teacher ! He decides to leave Mādhavī and he does so. Mādhavī pleads her innocence and requests him, not to leave her. But Govala would not change his decision.

Her conversation with Rajaśekhara has changed his mind completely. On that very fateful day, Govala played on Veena, (in the morning) a few musical notes depicting an imaginary love affair. Mādhavī also played on Veena, a few musical notes. She expressed her thoughts in her recital which were similar to those of Govala. But Govala has taken this to his heart and it was green in his memory, when he sees her in deep conversation with Rajaśekhara. He comes to the conclusion that, the relationship between the two, i.e. Rajaśekhara and Mādhavī must have been the back-ground for the Veena recital of Mādhavī in the morning. So, Govala decides to go back to his home and leaves Mādhavī, rejecting her appeal. On his way back, he laments for all his bad deeds which have made him bankrupt. He also feels sorry for the social stigma attached to him because of his stay in the house of Mādhavī. The rejection of gift by the Brahmin also makes an indelible mark in his mind.

## ACT - VI

The opening scene of this Act, presents Madhugrīva on his way to the house of goldsmith to bring the pair of anklets which has been given to the goldsmith for carrying out some minor repairs. The manager of the house, Śambhu Śarmā meets him and we have a funny conversation between the two. Śarmā has heard a rumour that Govala has left the house of Mādhavī (the previous night) and wants to know whether he had heard any such news. Madhugrīva says he hasn't heard any such rumour.

In the body of the Act, Śambhu Śarmā, pleads with Kaṇṇaki, to file a petition in the court of the King pointing out the deeds of Govala with a prayer for remedy through the intervention of the king. But Kaṇṇaki turns down the suggestion stating that Govala has not forsaken her and that he was well within his rights in staying at the house of Mādhavī. This shows her deep devotion to her husband. At this juncture, Govala enters the house and everybody is taken aback. Soon after this, Madhugrīva brings back the pair of anklets from the house of the goldsmith. Kaṇṇaki thinks that Govala has come to take some more money. She offers the pair of anklets to her husband, the only property now left with them.

But Govala feels very sorry for his behaviour and sheds tears. He decides to do some business, with the proceeds of the sale of anklets as the capital. Kaṇṇaki leaves Govala alone, as she has to attend to household routine. When Govala is alone Vasantamālā brings a letter from Mādhavī. Mādhavī has pleaded in that letter

that she was inhocent. But, Govala rejects her request and sends back Vasantamālā with his reply (in the same letter). He also says that he would not visit Mādhavī any more. At the end of the Act, Govala decides to leave his place (Pugar pattinam). For, he is ashamed of living among his relatives, when he has become penniless. So he decides to leave the city next morning alongwith Kaṇṇaki. He decides to go to Mathura, the capital of Pāṇḍya kingdom to run a business with the sale proceeds of anklets. Kannaki agrees to this proposal.

## ACT - VII

After a month's travel, Govala & Kaṇṇaki reach the city of Mathura. They take a rented house and stay there. In the meantime Govala takes one of the anklets to the bazaar and wants to sell it. Till noon, nobody comes forward to purchase it, though everybody praises the workmanship of the ornament. Finally a goldsmith, attached to the Royal family comes forward to help him. He says that an emperor alone can purchase such a valuable ornament. So he promises to come back after showing the anklet to the emperor of Mathura. He refuses to take Govala with him under the pretext of avoiding delay. In his anxiety for early sale, Govala too agrees to stay back and the goldsmith takes away the anklet. When Govala was alone, Māṭharayajwā, meets him. Māṭhara is taken aback when he happens to meet Govala, who has left his home town. When Govala prostrates before him (Māṭhara), he is in a dilemma how to bless him. For, Māṭhara feels that Govala is a sinner. But, on second thoughts he blesses him that he may become a famous man. Then follows a conversation, between the two. Māṭhara reveals to Govala, that Mādhavī has taken to the life of a Jain nun after casting away all her jewels together with her locks of hair. Govala at once realises his folly, in having come to the hasty conclusion about the character of Mādhavī He repents his hasty judgement. Māṭhara is on his way to holy places. He also says, that Govala is being searched for by his relatives in all directions. Māṭhara says that though he (Govala) had been doing good deeds also in this birth, his present plight was due to his bad deeds in previous births. Govala reveals his bad dream to Māṭhara

and the latter consoles him. Māṭhara wants to know when Govala is likely to return to his house. Govala does not answer the question. He also pleads with Māṭhara not to disclose to anybody about their meeting at Mathura. At this critical moment, Māṭhara remembers the bad omens that took place during the marriage of Govala and feels extremely sorry. He makes a prayer to Lord Siva, for the welfare of all.

He leaves the stage with a statement, that he has to visit two important Vaishnavite temples. viz. Thirupaty and Sri Rangam, since he has so far visited only Siva temples.

At the end of the act we are given to understand that the King of Pāṇḍya, has left his court and that he is on his way to the harem, where he wants to meet his crowned queen, who is reported to be angry with him.

## ACT - VIII

The goldsmith who has taken the anklet from Govala enters the stage. In his soliloquy he reveals that he has stolen the anklet of the Queen, and that no one has detected the crime till then. So he plans, to trap Govala, by telling the King that Govala is the culprit who has stolen the royal anklet from the Royal abode and that the anklet in his (Govala's) possession belonged to the Queen. With this bad intention he approaches the King of Pāṇḍyas. The King was on his way to meet the Queen. The mind of the King was engrossed in the theft of the anklet and he reveals his heavy heart to the accompanying Minister. The Queen has been quarrelling with the King under some pretext or other from the day of the disappearance of the anklets. The King sees in the loss a foreboding, and wants the Minister to order an astrological study by competent Pundits to ascertain, whether the position / movements of planets does indicate anything bad either for the country or for the King. Then, the King orders all his attendants to leave and he was about to enter the palace of the Queen. His mind was totally filled with the thought of the Queen. At that time, the goldsmith presents his case to the King and the King orders his police guards to bring the head of the culprit. (i.e. Govala), if he had the anklet in his possession. The goldsmith takes the guards with him to the place where Govala, was waiting. He tells Govala that the Guards have come to take possession of the anklets and gives the anklet to him, with a request to hand it over to the guards. Govala believes his words and gives the anklet to the guards. who have come with the gold-

smith. The guards doubt whether the anklet belonged to the royal family. They also doubt whether Govala was the real culprit since he did not look like a thief. But the goldsmith prevails upon them and persuades them saying that he was the real culprit and that the anklet belonged to the Queen. Left with no other choice the guards prepare themselves to carry out the orders of the King. Bewildered Govala is not able to understand the developments and finally comes to know the order of the King through the words of the guards. His pleadings with the police guards regarding his innocence have very little effect. His appeals for mercy also fail to elicit any sympathy from the guards. For they have got final orders from the King himself. Govala shouts at the goldsmith for his deceitful act. But soon, he realises that this punishment must be the result of his bad deeds in previous birth. But, on second thoughts he comes to the conclusion that this was due to the aspersions he had cast on Mādhavī's character.

## ACT - IX

The Act begins with the description of Sunrise. followed by a conversation among the citizens of Mathura, the capital city of PĀṆDYĀS. They discuss current politics and rumours prevailing in the bazaar. From the conversation we understand that the following things have taken place.

i) A merchant. who has come from another country has been executed under the orders of the King.

ii) The King might have ordered the execution owing to a slip of the tongue (since he was engrossed with the thoughts of the Queen)

iii) A conference of Astrologists was convened on the orders of the King. They have concluded that the time was bad for the city of Mathura and for the Royal couple. The city is likely to be consumed by fire because of the combination of planets.

iv) Some bad omens were noticed by the shephards in their cattle sheds indicative of misfortune for the country.

While they were talking like this, they hear the cries of Kannaki. Kaṇṇaki enters the stage with an anklet in her hand: In the soliloqny that follows, Kannaki gives out her feelings in a forceful way. She denounces the people, the King and even Meenakshi, the presiding deity of Mathura. Finally, she laments her lot which she feels must be due to her bad deeds in previous birth. By this time we are given to understand that the King has arrived at the court and that his mental agony has disappeared (since he was able to pacify the Queen).

Then Kaṇṇaki enters the court of the King to plead her case. She presents her case in an emphatic way and accuses the King that he had failed to fulfil his royal duties and obligations since he has ordered the execution of her husband in a hasty manner without verifying the facts. She pleads in the court that her husband has not committed the crime of theft and that he has been wrongly accused. He had been punished for a crime which he has not committed. In other words, an innocent man has been sent to gallows.

The King argues that he has not committed any mistake in awarding the capital punishment to her husband and he pleads that the execution of a thief was well within his powers (as it was the proper punishment in such cases of crimes.)

Kaṇṇaki asks the King whether he has seen the anklet in the hands of her husband. In other words it was a straight question whether the crime has been proved beyond reasonable doubt. The King replies in the negative. Kaṇṇaki then tells the King that her anklets contained precious "MĀNIKYA" stones. The King says that the Royal anklets contained pearls. So, the King orders his guards to bring the anklet that has been confiscated from the executed Govala. Kaṇṇaki identifies the anklet and after taking it from the hands of the King, she breaks it open by throwing it on the ground with force. Precious stones of Māṇikya come out of the broken anklet and one such stone falls before the King. Now, it is proved beyond doubt that the anklet which Govala was having was not the royal anklet reported to have been stolen. The King realises his mistake and feels very sorry. For, according to his own statement the royal anklet contained pearls only, whereas the anklet confiscated from the hands of Govala is

proved to contain, only precious māṇikya stones. He says that he is not worthy of the Office (i.e. King's post) and feels that he himself is the thief. So, saying he breathes his last and falls from the throne. On seeing, the king falling like this, the queen also falls at his feet and dies.

The court scene comes to a close and Kaṇṇaki leaves the court. The fire god now appears before Kaṇṇaki in the form of a Brahmin. Kaṇṇaki orders the fire God to burn the entire city leaving good people, old persons and children. The fire god replies that he is already in receipt of orders from Gods to that effect and the city was destined to that fate because of the bad combination of planets. In reality the city has already been burnt by the fury and fire of chastity of Kaṇṇaki.

The Act comes to a close with the description of the burning Mathura city.

## ACT - X

The events of the Act, are supposed to take place in the world of Indra (i.e. Heaven). We cannot have a tragedy in Sanskrit drama. So, we have brought the reunion between Govala and Kaṇṇaki in the other world. This sort of bringing unity between hero and heroine is nothing new in Sanskrit literature.

The act begins with the entry of Nārada in Kailasa. He tells Parvati of the fire that consumed Mathura Pārvaty is very unhappy to learn this, since Mathura was her father's city (Meenakshi - (i.e. Pārvathy) is the daughter of Paṇḍya King and given to Somasundara in marriage. There is a reference to this story here.) Lord Siva pacifies her and takes her to the world of Indra, where the divine court is in progress. There is a discussion about the interpretation of a peculiar usage occurring in Upanishad and Bṛhaspaty gives the correct interpretation for the usage. Just then, two couples (i.e.) i) Govala and Kannaki ii) Pandya King and Queen arrive there. Indra explains to Kaṇṇaki the past deeds of Govala in previous birth that brought him the misfortunes of his life on earth. He orders all the four to remain in Devaloka itself. But there is some objection to this decision from some quarters of the court, since they are branded as sinners. Sinners have no place in heaven. But it is explained that Govala was not a sinner. Though he might have committed some sins, he has received capital punishment and this punishment has purified him. Hence he deserves a place in Heaven. Kaṇṇaki and the Queen deserve a place in that world for their chastity, and deserve to be worshipped and honoured by one and all.

proved to contain, only precious māṇikya stones. He says that he is not worthy of the Office (i.e. King's post) and feels that he himself is the thief. So, saying he breathes his last and falls from the throne. On seeing, the king falling like this, the queen also falls at his feet and dies.

The court scene comes to a close and Kaṇṇaki leaves the court. The fire god now appears before Kaṇṇaki in the form of a Brahmin. Kaṇṇaki orders the fire God to burn the entire city leaving good people, old persons and children. The fire god replies that he is already in receipt of orders from Gods to that effect and the city was destined to that fate because of the bad combination of planets. In reality the city has already been burnt by the fury and fire of chastity of Kaṇṇaki.

The Act comes to a close with the description of the burning Mathura city.

## ACT - X

The events of the Act, are supposed to take place in the world of Indra (i.e. Heaven). We cannot have a tragedy in Sanskrit drama. So, we have brought the reunion between Govala and Kaṇṇaki in the other world. This sort of bringing unity between hero and heroine is nothing new in Sanskrit literature.

The act begins with the entry of Nārada in Kailasa. He tells Parvati of the fire that consumed Mathura Pārvaty is very unhappy to learn this, since Mathura was her father's city (Meenakshi - (i.e. Pārvathy) is the daughter of Paṇḍya King and given to Somasundara in marriage. There is a reference to this story here.) Lord Siva pacifies her and takes her to the world of Indra, where the divine court is in progress. There is a discussion about the interpretation of a peculiar usage occurring in Upanishad and Bṛhaspaty gives the correct interpretation for the usage. Just then, two couples (i.e.) i) Govala and Kannaki ii) Pandya King and Queen arrive there. Indra explains to Kaṇṇaki the past deeds of Govala in previous birth that brought him the misfortunes of his life on earth. He orders all the four to remain in Devaloka itself. But there is some objection to this decision from some quarters of the court, since they are branded as sinners. Sinners have no place in heaven. But it is explained that Govala was not a sinner. Though he might have committed some sins, he has received capital punishment and this punishment has purified him. Hence he deserves a place in Heaven. Kaṇṇaki and the Queen deserve a place in that world for their chastity, and deserve to be worshipped and honoured by one and all.

Though the Pandya King acted in a hasty manner, and punished an innocent merchant, he had realised his mistake and repented it. Not only had he realised his folly but he ended his life also on realising his mistake. This has purified him and hence he deserved a place in the divine abode.

Lord Siva (who had been watching the proceedings) enters, the court of Indra (with Pārvaty) and approves the decision of the divine court. He also offers place in his Kailasa mountain if they are to be denied a place in Indra Loka. All are happy at this and the play comes to a close with the usual Bharatavākyam.

———

॥ श्री: ॥

# ॥ प्रस्तावना ॥

द्रविडभाषायां सुप्रसिद्धं काव्यं "शिलप्पधिकार-मि"ति नामकं विजयतेतराम् ॥ तस्य कर्तारस्तावत् "इलङ्गो अडिगल्" इति ॥ अतिपवित्राः स्वीकृत तुरीयाश्रमाः ॥ तेभ्यः प्रथमं नमोवाकं सविनयं वदामः ॥

तत्काव्यगतेतिवृत्तं यथामति गीर्वाणवाण्यां नाटकरूपेण वक्ष्यामः ॥ सन्तस्सावधाना भूत्वा पश्यन्तु ॥

इतिशम्

| संकेत: | विवरणं | संकेत: | विवरणं |
| --- | --- | --- | --- |
| सू-धा | सूत्रधार: | मा. | माधवी |
| मा-य | माठरयज्वा | दे-का. | देवन्तिका |
| श्वे-स्वा | श्वेतस्वामी | रा-शे | राजशेखर: |
| म-ना | महानायक: | नाडि. | नाडिन्धम: |
| म-सा | महासाधु: | पां | पाण्ड्य: |
| म-न-प | महानायकपत्नी | अमा. | अमात्य: |
| गो | गोवल: | पु.र. | पुररक्षक: |
| क. | कण्णकी | अ.पु.र. | अन्य:पुररक्षक: |
| म-ग्री | मधुग्रीव: | दौ. | दौवारिक: |
| क.मा. | कण्णकीमाता | गि.दे. | गिरिजादेवी |
| शं-श | शंभुशर्मा | म. | महेन्द्र: |
| ना.आ | नाट्याचार्य: | वा. | वाचस्पति: |
| व.मा. | वसन्तमाला | | |
| व.ला | | | |

।। नमस्सभापतये ।।

## प्रथमोऽङ्कः

# नान्दी

श्वेतच्छत्रनिभो विधुर्विजयते लोकावतंसो निशि
चिद्रूपश्चखगोऽपि येन यमितो हेमाद्रिमा सेवते ।
पृथ्वीं चाब्धिमतीं सुसस्यफलदां वृष्टिश्च संवर्धते
तत्सत्यं महितं स्वधर्मनिरतान्ब्राह्मं महः पातु वः ।। 1

(नान्द्यन्ते प्रविशतिसूत्रधारः)

सूत्रधार : (आत्मगतं) अहो विद्वद्भूरितेयं परिषत्! (नेपथ्याभिमुखः) के वात्र संगताः? किं नट इत एवागच्छति भवतु तमेव पृच्छामि— किं सर्वे सन्नद्धा इति—

(ततः प्रविशति नटः)

नट : नमांसि भूयांसि-(सांजलिर्वदति)

सू-धा : अद्य सुब्बुकृष्णश्रौतिरचितं "शिञ्जिनीयं" इति द्रविड-देशप्रसिद्धेतिवृत्तभरितं नाटकं प्रदर्शनीयं वर्तते-तत्र-सर्वे सन्नद्धा वा? (विरम्य) मयि भाषमाणे किं तूष्णीं तिष्ठसि?

नट : (हि-हि-हि-हसन्) तत्र प्रायेण सर्वे ग्राम्यछायाचित्रदर्शन-लोलुपाः-दूरदर्शनसाधनमपि सर्वेषु गृहेषु वर्तते-को वा नाटके-विशिष्य भवतां संस्कृतनाटके निमग्नहृदयो भविष्यतीति मन्दोत्साहोऽस्मि— तावदेव—

सू-धा : आः-किमेतत्? तथा न वक्तव्यं-इयं च नाट्यकला सर्वेषामपि हृदयाह्लादजननी-यद्यपि सहृदया विरलाः स्युः-तावता भग्नोत्साहो मा भूः ।।

नट : अन्यच्च ।। अस्य नाटकस्य प्रणेतारः- वेदाभ्यासनिरताः कर्म निरताश्च ।। इतिवृत्तमपि जनरञ्जकं न भवति-तत्र नायको गोवलः-वेश्यारतः- दारपरित्यागीच ।। मथुरापुरनरपतिरपि-अविमृष्टकारी ।। गोवलमविचार्यैव मारितवान्-एकस्यापराधसत्त्वेऽपि निष्कारणेनैव कृत्स्नापि मथुरापुरी दग्धा । एवं नाम परश्शतम्-... तादृशं काव्यं प्रदर्शनीयं कथं स्यात्?

सू-धा : साधुपृष्टं-अस्मिन् काव्येऽपि सद्वस्तुबोधकमेवेतिवृत्तम्-तदग्रे स्पष्टंभविष्यति । राज्ञां धर्मविरुद्धं कृत्यं मृत्युदायकम् ।। पति–देवताः स्वर्गेऽपि पूजां लभन्ते-दुष्कृत्योत्थं फलं-अनिवार्यं-अनुभवैकशाम्यंच-एवमादयः सद्विषया अत्रापि बोध्यन्ते-किंच-वेदाभ्यासरताः श्लोकशत्रवः किमु? तिक्कनसौमयाजिनः (आंध्रकवयः); अप्पय्यरामभद्रनीलकण्ठादयो दीक्षिताः कवयोऽस्मद्देशे प्रसिद्धाः ।। एवमन्ये च कर्मरता वेदैकशरणा बहवः ॥ "ऋषितुल्यो हि काव्यं रचयती"ति-आलंकारिकसमयः-एवंचेदमपि प्रदर्शनीयमेव-सहृदयमणयो यद्यपि विरला नूनं मुदिता भवेयुः-अतः-आलस्यं निरुत्साहतां च त्यक्त्वा सर्वे सन्नद्धा भवन्तु-अहमपि सन्नद्धो भवामि—

नट : अन्यच्च-विषादान्तमिदं नाटकं; एवं सति कथं प्रदर्शनीयं भवति- ?

सू-धा : तदपि न-नायकयोरुभयोरपि लोकान्तरे पुनस्संगमवर्णनं वर्तते-अतः प्रदर्शनीयमेव (नेपथ्येकलकलः- कर्णंदत्वा-) किं मङ्गल--तूर्यघोषः श्रूयते ! पुराणमन्त्राश्चपठ्यन्ते ।। अहो!सन्नद्धाः किमु?

नट : अथकिम्! तत्र गोवलस्य कण्णक्या साकं विवाहः संवृत्त इदानीमेव ।। तत्रत्योऽयं कोलाहलः- (नेपथ्येश्लोकरवः) विवाह-

मण्टपात्-एष माठरयज्वा-इत एवागच्छति-अहमपि तत्र सन्नद्धो भवामि-(इति निष्क्रान्तौ)

।। प्रस्तावना ।।

(नेपथ्ये-"रक्षन्ति पुण्यानि पुराकृतानि" — ततः प्रविशति यथानिर्दिष्टो माठरयज्वा-)

**माठरयज्वा :** (आत्मगतं) "रक्षन्ति पुण्यानि पुराकृतानि" - अहो दैवगतिः (अञ्जलिबन्धं कृत्वा निमीलितलोचनः क्षणं तिष्ठति) (प्रकाशं) साधुसंवृत्तं-साधु-साधु-।। महासाधुः महानायकश्च पुण्यपुरुषौ ।। (पादरव श्रुत्वा) कथं श्वेतस्वामी-? अहो! विवाहार्थं कलत्रेण साकं विलम्बितो गच्छति किमु ?

(कलत्रेण साकं प्रविशति श्वेतस्वामी)

**श्वेतस्वामी :** किं स्वामिन् ? मार्गे निमग्नहृदयस्तिष्ठसि ? विवाहात्प्रतिनिवृत्तः किमु ?

**मा-य :** अथकिम् ! किं त्वं विलम्बेन गच्छसि ?

**श्वे-स्वा :** सन्निहितस्य बन्धोः विवाहः - सन्निहितग्रामे प्राचलत् - तत्रगत्वा - गोवलविवाहार्थं गच्छन्नस्मि - तत्र को वा विशेषः - उद्वाहस्सम्पूर्णः किमु ?

**मा-य :** किं वर्णयामि-किं वा कथयामि ? नागलोकवत् - नाकलोक-वच्च यशस्विनीयं पुरी ! एतावत्पर्यन्तं-एतादृशोद्वाहोत्सवोऽस्यां नैव संवृत्तः - तत्रसन्देहः—

**श्वे-स्वा :** भवतां सर्वत्र सन्देहः ।। विद्वान् खलु भवान् ।। मादृशास्सुखं जीवन्ति ।।

मा-य : अयमेव सन्देहः - महानायकः कण्णकीपिता पुण्यतमो वा - गोवलपिता महासाधुः पुण्यतमो वा - इति

श्वे-स्वा : तत्र कस्सन्देहः गोवलपितैव पुण्यतमः (इति वदन् भार्यां साकूतं पश्यति) वल्लि ! त्वं किं मन्यसे ?

वल्ली : महानायक एव पुण्यतमः-नो चेत्-स्वर्णलता, सा, ऽरुन्धती-तुल्या, पापापेता, कण्णकी, कथं तस्य दुहिता स्यात् ?

मा-य : भवतु-अहं तु मन्ये-विवाहदर्शनार्थं ये समागता मादृशाः - त एव पुण्यपुरुषाः-अन्यथा-ईदृशः पाणिग्रहमहोत्सवः-दृष्टिगोचरो न भवेत् ! किं वर्णयामि-? प्रथमतो द्विरदारूढा ललनाः पौरपरिज्ञानार्थं विवाहोद्घोषणं पुरप्रदक्षिणपूर्वकमकार्षुः - तदारभ्य विवाहहुताशनप्रदक्षिणपर्यन्तं सर्वमतिरमणीयमासीत् !

वल्ली : किं किं संवृत्तं-भवन्तो वर्णयन्तु-अकृतपुण्या वयं किंचिदिव विलंबिताः ।

मा-य : किं बहुवचनं त्वया प्रयुज्यते ? युवां द्वावेव दृष्टिगोचरौ ! अदृष्टिगोचरोऽन्योऽपिजीवो वर्तते किमु ? (साकूतं पृच्छति)

वल्ली : (जिह्वां दन्तपंक्तिभ्यां निपीड्य)-न-न-न (सलज्जं) जिह्वास्खलनमेव- ।।

श्वे-स्वा : स्वामिन् ! किं वदामि ! इयं तव स्नुषा वन्ध्या स्यादिति मे भीतिः—

मा-य : तथा न वक्तव्यं-वल्लीनायकस्य प्रसादात्-इयं च वल्ली फलवती भवेत् ! मास्तु भीतिः ।।

वल्ली : विवाहवर्णनात् सुदूरमागता वयम् !

मा-य : एवमेवं-मङ्गलतूर्यभेरीमुरजादिनिर्घोष इदानीमपि श्रूयते खलु ! अद्य तावद्रोहिणीनक्षत्रं-उद्वाहस्यातिप्रशस्तम् ! अतिवृद्धः

पुरोहितः प्राजापत्यविवाहविधानेन स्मृतिपुराणसिद्धैर्मन्त्रैः-वणिक्कुलसम्प्रदायमनतिक्रम्य तयोर्मङ्गलसूत्रबन्धनादिकं सर्वं सम्यक्-निर्वर्तितवान्-तत्र हि—

**विवाहे वितते तन्त्रे सर्वे सम्पूर्णमानसाः**
**आशिषा वर्धयांचक्रुर्दम्पती तौ कुलोत्तमौ 2**

वल्ली : अतिरमणीयतया संवर्तनमपि दृष्टिदोषावहमिति वृद्धा वदन्ति !

मा-य : सर्वं सम्यक् संवृत्तं-परंतु...(अर्धोक्तौ विरमति)

श्वे-स्वा : परंतु किं ? किमपि वक्तुकामा इव वर्तन्ते-।

मा-य : चन्द्रे कलङ्क इव तत्र द्वित्रा दोषाः शुभेतरद्योतका आसन् !

वल्ली : किं किं ? अहो दैवगतिः !!

श्वे-स्वा : नाहं तत्र विश्वसिमि-कथं नाम ते शुभेतरद्योतकाः ? सर्वं पुरुषप्रयत्नेनैव समाधातुं परिहर्तुं च शक्यते ! किं संवृत्तम् ?

मा-य : वरद्विरदाननपूजार्थं भिद्यमानं नारिकेलफलं पंचधा शकलितम्-मंगलसूत्रं बन्धनसमये भूमौ पतितम् - हुताशन प्रदक्षिणकाले गोवलस्य पादेऽश्मघातः सम्पन्नः - किं कुर्मः ? दैवगतिस्तादृशी वर्तते ।

श्वे-स्वा : आः ! नारिकेलभेदनकालेऽनवधानता कारणं - एवं मंगलसूत्रपतनेऽपि - अश्मनि पादाभिहननं त्वराप्रयुक्तं स्यात् ! कथमेते शुभेतरद्योतकाः ? भवादृशा एव, एवं कल्पितवन्तः - दैवगतिरिति काचनगतिर्नैव वर्तते - इयं मम मतिः ।। एतादृश —कर्मजातमपि नैवावश्यकमित्यास्माकीनः पक्षः ।।

वल्ली : अलं भवदीयनास्तिकवादविवरणेन ।। पूज्ययज्वन्! आर्यपुत्रः-लोकायतवादी-अत एवं वदति-मनसि न किमपि चिन्तनीयम् ।

**मा-य :** अस्तु नाम - तादृशी दृष्टिस्तेषां वर्तते - तावता किं नश्छिन्नम् ? नराणामभिरुचिर्लोके विभिन्ना वर्तते-वयं किं कुर्मः?

**वल्ली :** साधूक्तं-नूतनदम्पत्योः कापि क्वापि हानिर्माभूदिति भवन्तोऽनुगृह्णन्तु-अमोघा हि यज्वनामाशिषः !

**मा-य :** कीदृशी शक्तिरस्माकं वर्तते ? तथापि प्रार्थनां कुर्मः—

(अञ्जलिं वद्ध्वा)

**नागास्यं रदनैकभासितमुखं द्वैमातुरं सिद्धिदम्**
**त्रेतानेत्रविशोभितं च वरदं देवं चतुर्बाहुकम्**
**पंचैनोगिरिभेदकं च करिणं धीदं षडास्याग्रजम्**
**सप्ताश्वद्युतितुल्यवर्णमनिशं सेवेऽष्टसिद्धिप्रदम् ! 3**

वरदमूर्तिस्सर्वदा सर्वान् रक्षति ।।

पुराकृतपुण्यनिचया अपि नूनं रक्षन्ति-अतो महासाधोः पूर्वपुरुषैः कृतानि पुण्यानि नूनं रक्षेयुः- तत्र सन्देहो मास्तु-एष साधयामि- "रक्षन्ति पुण्यानि पुरा कृतानि" (पुनः पठति)

**वल्ली :** आर्य ! नमस्करोमि - आशिषाऽनुगृह्णन्तु भवन्तः - भवन्तोऽपि नमस्कुर्वन्तु (भर्तारं वदति) (पादयोः पततः)

**मा-य :** किं रथ्यायामेव वन्दनं करोषि भर्त्रासाकम् ? (आत्मगतं) अस्या एतदृशी श्रद्धा !! अस्य तावत् तदभावः ! (प्रकाशं) उत्तिष्ठत-भगवतः प्रसादात् स्वस्ति वो भूयात् !

**श्वे-स्वा :** भवतापि वहुवचनं प्रयुक्तम् !

**मा-य :** एवं वा ! (संचिन्त्य)अथ किम् ! बुद्धिपूर्वकमेव भाविनीं त्रित्वसंख्यामाश्रित्य बहुवचनं प्रयुक्तम्! (साकूतं वल्लीं पश्यति)

**श्वे-स्वा :** वल्लि ! स्वामिना किमुक्तमिति ज्ञातं वा ?

(स्मेरानना सलज्जा वल्ली तिष्ठति)

भा-य : कालातिक्रमो भवेत् - विवाहमृष्टान्नभोजनार्थं त्वरया गच्छतं- अहमपि - अनुष्ठानार्थं गच्छामि - (इति निष्क्रान्तः)

वल्ली : तपोधनोऽयं यज्वा न कुत्रापि गच्छति-महासाधोः प्रार्थनां स्वीकृत्य तयोरनुग्रहार्थमागतः ! एतादृशानां महनीयानामाशी- र्बलात् तौ दम्पती निष्कण्टकौ नीरोगौ विश्लेषरहितौ-अन्योऽन्या सक्तौ च स्यातामिति मे मतिः—

(नेपथ्ये स्तोत्रपाठः)

श्वे-स्वा : हे। किं दिवामध्यभागः संवृत्तः ? शिवाचार्यः स्तोत्रपाठं पठति !

वल्ली : (कर्णं दत्वा) हां - एवं - एवं -

(नेपथ्ये स्तोत्रपाठः)

**लोकानामवनं हि यस्य सततं कारुण्यसिन्धोर्व्रतम् -**
**दग्धं येन पुरत्रयं सुरहिते वर्णी गृही योऽभवत् -**
**पीतं येन महाब्धिमन्थनविधौ हालाहलं सस्मितम्**
**त्रातश्चापि मुदा मृकण्डुतनयस्तस्मै नमश्शम्भवे ! 4**

श्वे-स्वा : एहि प्रिये! एहि! कालातिक्रमो जातः-एहि-एहि-गच्छावः!

(इति निष्क्रान्तौ)

॥ प्रथमोऽङ्कः ॥

## ।। द्वितीयोऽङ्कः ।।

(ततः प्रविशति-आसनस्थो महानायकः-स्वगृहे)

महानायक : (आत्मगतं) अहो ! गृहं शून्यमिवाऽऽभाति ! कण्णकी भर्तृगृहं प्राप्तवती ।। मासद्वयंगतं-तथापि विश्लेषदुःख मतीव बाधते-हायनद्वयमतीतमिव भाति ! (नेपथ्याभिमुखं वीक्ष्य) (प्रकाशं) कोऽप्यागच्छतीव (विमृश्य) हां - महासाधुः - आगन्तव्यमागन्तव्यं !!

(महासाधुः प्रविशति)

महासाधु : नमस्ते महाभाग ! अपि कुशलम् ?

म-ना : एवं-कथं वा गोवलो वर्तते ? कथं कण्णकी ? सर्वे कुशलिन इति मन्ये ।। किं पिबसि पयः-तक्रं वा ?

म-सा : एवमेव-इदानीमेव भक्ष्यादिकं स्वीकृत्य शाकक्रयार्थमापणं प्रति प्रस्थितोऽस्मि-मध्येमार्गं भवद्दर्शनार्थमागतः ।

म-ना : महान् मोदः - (गृहाभिमुखो भूत्वा) प्रिये ! अत्रागत्य कोवाऽऽगत इति पश्य ! ("आगताऽस्मि"-प्रत्युत्तरं श्रूयते)

(ततः प्रविशति महानायकपत्नी)

म-ना-पत्नी : (आत्मगतं) अहो भ्रातृपादाः ! (प्रकाशं) सादरं वन्दे भ्रातः ! अपि कुशलम् ? कण्णकी कथं वर्तते ? गृहकृत्यानि सम्यक् करोति वा ? वृद्धेषु बद्धादरा वर्तते वा ? तौ पृथग्वासं कुरुतः-इति श्रुतं-एवं वा ?

म-सा : बाढं - बाढं - तौ पृथग्वासं कुरुतः-अस्मत्कुलाचारमाश्रित्य - भवद्भ्यामनिवेद्यैव तयोः पृथग्वसतिस्सज्जीकृता-तस्या गृहनिर्वहण —नैपुण्यं दृष्ट्वा गोवलमाता तयोः पृथग्वसतिं सज्जीचकार-तत्र

प्रियस्नुषा बन्धुवर्गस्य-अन्येषामतिथीनां च सोपचारमाराधनं कुर्वती वर्तते—

म-ना-प : पूर्वेद्युर्मठिरार्यं आगतः - तन्मुखात् - ज्ञातम् - (विरम्य) इन्द्रोत्सव आगच्छति-तदा कतिपयदिवसवासार्थं नौ प्रेषणीयौ- इति मे प्रार्थना ।। आर्यपुत्रोऽपि गृहमागत्याऽऽह्वयति-अत्यल्पं पयः पिब भ्रातः !

म-सा : मास्तु ! विवाहभोजनादारभ्य जाठराग्निर्मन्दीभूतो वर्तते- (संचिन्त्य) नूनं प्रेषयामि-इन्द्रोत्सवकाले ।। चिन्ता मास्तु- तौ सन्तुष्टौ वसतिं कुरुतः-

(अन्तः प्रतिनिवृत्ता कण्णकीमाता)

म-ना : का वार्ता ? वसन्तकालोऽप्यागतः-शिशिरकाले मन्दीभूताः क्रयविक्रयधान्यपरिवर्तनादिवाणिज्यव्यवहाराः - इतः परं सम्यक् प्रवर्तेरन् !

म-सा : अहमप्येवमेव मन्ये-अस्मिन्नेव वसन्ते पण्यस्त्रीकुलजाताया माधव्याः प्रथमनाट्यप्रदर्शनमपि भविष्यतीति किंवदन्ती प्रवर्तते ।।

मना : एवं वा-तर्हि महानुत्सव एव तदा स्यात् ! तदा कुलीनोऽपि कश्चन युवा तस्या दासो भवेत्-अहो तथाभूतस्य कस्यचिद्यूनः क्लिष्टा दशा ! तथाहि :—

**तस्याः पादौ सेवमानं युवानं**
**भ्रान्तं कान्तं कामसम्मूढचित्तम्**
**नूनं दोग्धा* वारनारीजलूका**
**रूपं रक्तं मांसमायुश्च वित्तम् !** 1

---

* दोग्धा— तिङन्तं पदं (verb) ।।

म-सा : एवं-एवं-पुष्पितायां माधवीलतायां द्विरेफा इव-अस्यां माधव्यां मत्ता युवकाः कुलीना अपि संलग्ना भवेयुः - परंतु विपरीतो मधुपानक्रमः !

**तथाहि—द्विरेफा मधु धास्यन्ति लतामाश्रित्य माधवीम्-**
**आश्लिष्टा माधवीं नारीं निष्पीतास्स्युस्तया नराः!! 2**

(हि-हि-हि-उभौ हसतः)

(एतस्मिन्नन्तरे तक्रमानयति कण्णकीमाता)

म-ना-प : तक्रं जाठराग्निदीपनाय युक्तरूपमौषधं, स्वीकुर्वन्तु - (महासाधवे प्रयच्छति)

म-सा : स्निग्धैर्दीयमानं सर्वं शरीरहितमेव - किं पुनः स्वस्रा दीयमानं तक्रं ! (इति स्वीकृत्य पीत्वा ततः प्रस्थितः) विलम्बासहन-स्वभावा मद्गृहिणी - एष साधयामि—

।। (इति विष्कंभः) ।।

(ततः प्रविशति माठरार्यः)

मा-य : सुदूरमागतोऽस्मि - किंचिदिव श्रान्तः - इदं गोवलगृहं - अन्तः प्रविशामि - (नाट्येन प्रविश्य) वत्स गोवल कथं वर्तसे? (उच्चैः) वत्से कण्णकि ! नूतनवसतिः कथं वर्तते ?

गोवलः : आर्यस्य पूज्यपादौ वन्दे ! अपि कुशलं ?

(कण्णक्यपि पाकगृहाद्बहिरागच्छति)

मा-य : युवां दृष्ट्वाऽतीव सन्तुष्टोऽस्मि— अयि भद्रे ! गोवलस्त्वयि सुस्निग्धो वर्तत इति मन्ये !

कण्णकी : भवतां - आशिषाऽतीव सन्तुष्टो स्वः—

मा-य : अस्तमयात् प्राक् - ग्रामान्तरं गन्तुं प्रस्थितोऽस्मि - श्रान्तः किंचिदिव विश्रान्त्यर्थमत्रागतः - गोवल! यथैषा जनककुलविश्लेषं न स्मरेत् - तथेमां प्रेमभारेण पोषय - किंचिदिव स्थित्वा प्रस्थास्ये-

(अत्रान्तरे फलानि ताम्बूलं चानयति कण्णकी)

कण्णकी : पूज्याः! इमानि स्वीकृत्यानुगृह्णन्तु भवन्तः - (दत्वा - पादयोः पतति - फलानि स्वीकृत्य माठरयज्वा प्रस्थितः)

गोवलः : प्रिये! (चुबुके गृहीत्वा)

**क्षीरवारिधिसम्भूतां मत्वा त्वां फाललोचनः ।।**
**फालं ते कृतवान्नूनं शिरस्स्थं तु तवानुजम्! 3**

**इक्षुधन्वा स्मरो नूनं द्वैधं कृत्वा स्वकं धनुः**
**चकार भ्रूलताद्वन्द्वं येन मां बाधतेऽनघे। 4**

**कार्तिकेयोऽपि देवेशः शक्त्यायुधमनुत्तमम्।**
**नेत्रयुग्मं चकारेति तीव्रदृष्ट्याऽनुमीयते ।। 5**

कण्णकी : (सलज्जं) अहं तावत् - अन्याभ्यस्सुन्दरीभ्यो रूप--यौवनसौन्दर्यादिभिरतिरिक्ता न भवामि-किंतु भवतां प्रीत्यतिशय एव सौन्दर्योत्तेजकः—

गोवल : तथा न वक्तव्यम् - परमार्थतस्त्वं - अतीव रमणीया वर्तसे- (गाढमालिङ्ग्य) अपि च—

**केशस्य कान्ति तव वीक्ष्य बर्ही**
**पादस्य चारं समुदीक्ष्य हंसः ।**

सम्प्राप्य खेदं शरणं प्रपन्नौ
वृक्षस्य शाखां च नदीषु तीरम् ॥ 6

अपि च-प्रकृतिसुन्दरीमपि त्वां त्वदीयाः प्रसाधिकाः सख्यः किमर्थं भूषणादिभिरलंकुर्वन्ति । अहो तेषां प्रसाधनतृष्णा ?

**कण्णकी :** अलमतिवर्णनेन - मयि सौन्दर्यातिशयो नास्ति - परंतु भवतां प्रेमाधिक्यमेव तथा विवर्तते - तावदेव—!

**गोवल :** (आत्मगतम्) । अहो शास्त्रपरिज्ञानं! (सप्रियं कपोले सम्पीड्य) अद्य सायन्तने श्रीमहेश्वरस्य पशुपतेराराधनं प्रचलिष्यति - देवस्य दर्शनार्थं गच्छावः - सन्नद्धा भव ॥

**कण्णकी :** अथकिम्!

(नेपथ्ये - "एषा वसन्तमालाऽऽगतास्मि—............")

**कण्णकी :** (वामेतराक्षिस्पन्दनं संसूच्य) - (आत्मगतं) किमिदं शुभेतरसूचकं! (प्रकाशं) आगच्छ - आगच्छ ॥

(ततः प्रविशति वसन्तमाला)

**वसन्तमाला :** महाभाग! स्वस्ति तेऽस्तु - (मंगलद्रव्याणि पत्रं च दत्वा) भद्रमुख! आगामिपूर्णिमायां रात्रौ वारमुख्यायाः - माधव्याः - नाट्यस्य प्रथमं प्रदर्शनं भविष्यति - भवता नूनमागन्तव्यम् ॥

**गो :** एवं वा - (वामाक्षिस्पन्दनं सूचयित्वा) शुभं भवतु - (पत्रं स्वीकृत्य) नूनमागन्तायं जनः - भद्रमस्तु—

(प्रतिनिवृत्ता वसन्तमाला)

**क :** आर्यपुत्र किमिदं पत्रं? केयं पत्रं दत्वाऽऽहूतवती ?

गो : पुरा खलु देवेन्द्रसभायां - उर्वशी नृत्यन्ती जयन्तकृतनर्मसंज्ञा-संलग्नमना: स्खलद्गतिर्बभूव।। कुपित: कुम्भसंभव:-"मानुषभावं प्राप्नुही"ति-उर्वशीं-"वेणुभावं भजस्वे"ति-जयन्तं च शशाप ।। सा-उर्वशी मर्त्यलोके माधवीति नर्तकी रूपजीविकाकुले जाता - तस्या नर्तक्या वंशे जाताऽपरा माधवी संप्राप्तयौवना सुशिक्षिता-ऽधुनाऽस्मिन् पत्तने वर्तते - तस्या: नाट्यस्य प्रथमं प्रदर्शनं भविष्यति - तदर्थमिदमाह्वानम् ।। याऽऽगता सा वसन्तमाला तस्यास्सेविका—

क : शान्तं पापं - आभिजात्यैकधनानामस्माकं तादृशदर्शनं मास्तु—

गो : को वा गमिष्यति - सा पत्रं प्रेषितवती - हस्तलब्धे सहकारफले विद्यमाने - को वा वृक्षाग्रस्थितखर्जूरफलार्थं यतेत ? मुग्धे ! पशुपत्याराधनदर्शनार्थं सज्जीभव - अहमपि वस्त्रान्तरं त्रिपुण्ड्रं च धृत्वा सज्जीभवामि ।। (इति निष्क्रान्त:)

क : (आत्मगतं) अहो मम भाग्यातिशय:-अनन्यासक्तोऽयमार्यपुत्र:-पण्यस्त्रीनाट्यदर्शनमपि तस्मै न रोचते - (चिन्तयन्ती तिष्ठति)

(प्रतिनिवृत्तो गोवल:)

गो : किमत्रैव तिष्ठसि ? मण्डनं संवृत्तं वा ?

क : अनेन प्रसाधनेनाप्यलं-देवदर्शनार्थं खलु गम्यते-विनीतवेषाभ्यामेव गन्तव्यं, नत्वन्यथा—

गो : तर्हि गच्छाव: - रे मधुग्रीव! (गृहसेवकमाहूय) गृहं सावधानतया रक्ष - देवदर्शनं कृत्वाऽधुनैवागच्छाव: (गृहसेवक: प्रविशति)

मधुग्रीव : यद्देव आज्ञापयति - (निष्क्रान्तौ कण्णकीगोवलौ)

(नेपथ्ये दुन्दुभिध्वनि:) (तदनुराजाज्ञा निवेदनध्वनिश्च)

"भो जना: ! श्व: प्रभृति - इन्द्रोत्सव: प्रचलिष्यति - स्वस्वाचार-

सिद्धप्रकारेणेन्द्रं समाराधयत - श्वः पताकारोपणं भवति - एवं राजाज्ञा—" (पुनः दुन्दुभिध्वनिः)

मधुग्रीव : अहो-इन्द्रोत्सवः-यस्य कस्यापि देवस्य तदा तदा महोत्सवः मम तु सर्वदोत्सव एव - अत्यासक्तो मयि गृहस्वामी - स्वामिनी च करुणार्द्रचित्ता - सेवकजनस्येतः परं किमपेक्षितम् ? एतादृशै-रुत्सवैर्निद्राभङ्गः - श्वः प्रभृति ।। अकाण्डे - अकाले च नाना-विधध्वनिः - हुम् ! (निष्क्रान्तः)

(नेपथ्ये कलकलः - अहो सश्रीकता वज्रधरमहोत्सवस्य ! अत्रहि—

रत्नस्थाणुभृतास्सुवर्णखचिता मुक्ताफलैर्भूषिताः
स्वच्छस्फाटिकचामरैश्च भरिताः श्वेतांकुरैर्मण्डिताः ।

धूपाद्यैश्च सुपोषिताश्च सकलास्सन्नद्धदन्तिध्वजाः
पार्श्वालंकृतजातरूपकलशाः शक्रोत्सवे वेदिकाः ।। 7

अपि च - आरुह्य रथनागादीन् राजामात्यवणिक्सुताः
महेन्द्रस्याभिषेकार्थं द्रुतं यान्ति सबान्धवाः ।। 8

किं च - अद्य वेदोदितैर्मन्त्रैस्तथापौराणिकैरपि
देवागारेषु सर्वेषु जपहोमादिकाः क्रियाः । 9

यथाशास्त्रं प्रवर्तन्ते योगक्षेमजयावहाः ।
एवमाराधितः शक्रः सस्याद्यैर्नोऽभिरक्षति ।। 10

कारागारोऽपि शून्योऽद्य माहेन्द्रे हि महोत्सवे ।
सकलापि च पूरद्य तुष्टा भवति भूपते ।। 11

(ततः प्रविशति श्वेतस्वामी गोवलगृहम्)

श्वे-स्वा : भ्रातः - गोवल - कथं वर्तसे ?

गो : स्वागतं - अपि कुशलम् ?

श्वे-स्वा : कथं प्रातरेव कर्णक्रूरा मन्त्राः श्रूयन्ते !

गो : मन्त्रा न - माठरार्यः शक्रोत्सवं महाराजाय वर्णयति - तावदेव—

श्वे-स्वा : मह्यं तावत् - इन्द्रोत्सव एव न रोचते - पुराणप्रसिद्ध इन्द्र उत्सवार्हो न भवति - इति मे मतिः ।। त्वं किं मन्यसे ?

गो : सर्वोऽप्युत्सव आवश्यक एवेति मृत्पिण्डबुद्धेरस्य जनस्य मतिः ।।

श्वे-स्वा : प्रायः पुराणानि शास्त्राणि च सम्यग्विचार्यमाणे (अर्धोक्तौ विरमति)

गो : बुद्धिमतामेव विचारणा शोभते - न तु मादृशानां ।। पानीयं किमप्यपेक्षितं वा ?

श्वे-स्वा : मास्तु ।। इह खलु सर्वोऽप्युत्सवः शास्त्रचोदितः !! शास्त्राणि च पुनः - जनानां मध्ये कैश्चित् - तेषां सौकर्यार्थं रचितानि -

गो : मैवं ब्रूयाः - शास्त्राणि सर्वेषां हितार्थं प्रवृत्तानि-हितशासनात् - "शास्त्रं" भवति-हितशासनत्वं सर्वेषां जनानां - नत्वेकदे - शिनाम् !

श्वे-स्वा : हुम्-एवमेव वयं प्राचीनकालादारभ्य परिमोषं प्राप्तवन्तः ।। (विरम्य) इन्द्रोत्सवे - रम्यं दर्शनीयं बहु वर्तते -

गो : किं किं दृष्टं त्वया ?

श्वे-स्वा : दर्शनैकज्ञेयम् - तथापि वच्मि ।। चन्द्रमाः स्त्रीरूपं धृत्वा भूमाववतीर्ण इति मन्ये—

तथाहि-"उरगाङ्गीतिमापन्नः स्त्रीरूपं प्राप्तवान् विधुः।
तस्यहि! मेघमाला कबर्यासीन्मृगस्तु नयनद्वयम्" ।। 12

अन्तकोऽप्येवमेव—

पुंरूपंतु परित्यज्य त्रस्तो राज्ञस्तु शासनात्।
यमोऽपि ललनारूपो यूनो दृष्ट्या निहन्ति हि ।। 13

अत्र हि पद्मजायाः पद्मं - सर्वेषां पुष्पाणां साहाय्यं स्वीकृत्य नारी -रूपेण पद्मामेवाऽन्विष्यतीति मन्ये - तथाहि -

कुन्दं दन्तं नवकिसलयं ह्यंगजातं समस्तम्
नेत्रद्वन्द्वं कुवलयदलं नासिका शंखपुष्पम्।
एवं बिभ्रत्कुसुमवदनं पद्मजायास्तु पद्मम्
पद्मामेवामरपुरनिभे मार्गयत्संप्रविष्टम् ।। 14

सखे! सर्वस्यापि वर्णनमशक्यम्-वीणावेणुमृदंगादि वाद्यविशेषाः... एवमादयः...एवं नाम बहु - माठरार्यवर्णिता जपहोमादयस्त्व- -त्प्रीतिजनकाः...

गो: उत्सवार्थं गृहे सर्वं सन्नद्धं वा - नूतनवस्त्रादिकं क्रीतं वा -

श्वे-स्वा: श्वः - मम पितृपादानां स्मारकदिनं - तदनन्तरमेवोत्सवः—

गो: भवद्भिरपि कीर्तिशेषेभ्यः पूर्वपुरुषेभ्यः - तेषां स्मारकदिने श्राद्धादिषु शाकतण्डुलादयो दीयन्ते वा? भवतां तादृशेषु विषयेषु सम्प्रत्ययो नैव वर्तते!

श्वे-स्वा: मम स्पृहा वा - सम्प्रत्ययो वा तेषु नास्ति - किंतु मद्गृहिणी वल्ली - अतीव श्रद्धावती - किं कुर्याम्? नेत्रनि —मीलनपूर्वकं सर्वं क्रियते—

गो : अहमपि-अद्य सायं प्रियया साकं-उत्सवार्थं श्वशुरगृहं गन्तास्मि-

श्वे-स्वा : तर्हि-उत्सवसमाप्तिपर्यन्तं स्वर्गनिवासो भवताम् !

गो : न-न-न- दिनत्रयं-आहोस्वित्-दिनचतुष्टयं तत्रोषित्वा प्रत्यागन्ता-तावदेव-तत्राधिकदिननिवासो न युक्तः ।।

श्वे-स्वा : स्वस्त्यस्तु - पुनरागमिष्यामि - ( विचिन्त्य ) माधव्या नाट्यांगीकारो भविष्यति-आवां मिलित्वा गच्छावः ।।

गो : मम तत्रातीवाभिरुचिर्नैत्र-यद्यवकाशस्स्यात् तर्हि गच्छावः ।।

श्वे-स्वा : अथ किम् ! (इति निष्क्रान्तः)

गो : (गृहाभिमुखं) प्रिये ! अत्रागच्छ-सायं पूर्वंकृतनिश्चयानुसारं त्वज्जननीगृहं गच्छावः-विस्मृतं वा ?

क : आर्यपुत्र ! नैव विस्मृतं-तदर्थं वस्त्राणि-आभरणानि च पेटिकायां संभृतानि-तथैव सायं गच्छावः ।

(इति निष्क्रान्तौ) (नेपथ्ये)

**एकचक्ररथो देवश्छायाजानिस्त्रयीमयः**
**योगिभ्यो भीतिमापन्नः प्राप्तवान् पश्चिमं गिरिम् 15**

(ततः प्रविशतो गोवलकण्णक्यौ)

गो : प्रिये ! मार्गे-उत्सववैभवं दृष्टं किल - !

क : विचित्रास्वापणरथ्यासु-नेत्रानन्दकरं वस्तुजातं बहु वर्तते—

गो : कालोऽपि वसन्तोऽतिरमणीयः । सर्वेऽपि वृक्षा नवैः पत्रपुष्पफलैर्भरिताः - शुकपिकद्विरेफैश्च सेव्यमानाः - चक्षुषः - श्रोत्रस्य-मनसश्च-आनन्दजनका वर्तन्ते—।

क : एवमेवं-अतिसुन्दरोऽयं वसन्तः !

गो : उत्सववैभवेन वसन्तमहिम्नाचाध्वातिलंघनं नैव ज्ञातम् !

क : एवमेव - इदमेवगृहं ; रथ्याशोभानिमग्नहृदययाऽऽगतमपि गृहं न ज्ञातम् ।

गो : वेश्म विस्मृतं वा ?

क : (स्मितं कृत्वा) अन्तर्गच्छावः ।।

(गृहं प्रविशतः)

क : (मातरमालिंग्य) अंब - आगतास्मि - (मातुः - नेत्रे चेलान्तेन परिमृज्य) कुत एतत् ?

कण्णकीमाता : पूज्यजामाता नागतः किमु ?

क : आगताः-प्राङ्गणे पित्रा साकं भाषमाणा वर्तन्ते—

क-मा : अतीव सन्तुष्टास्मि-उत्सवसमाप्तिपर्यन्तं - अत्रैव स्थातव्यं - (प्राङ्गणमागत्य) भद्र-स्वागतं-अपि कुशलं ? (गोवलं पृच्छति)

गो : एवमेवं-प्रिये! आगच्छ-पादसेवनं कुर्वः-(उभौ-उभयोः पादसेवनं कुरुतः-कण्णकी मात्रा साकं-अन्तः प्रविष्टा)

म-ना : वाणिज्यं कथं वर्तते- ? पितृपादाः कथं वर्तन्ते ?

गो : पूज्यपादा वाणिज्यार्थं देशान्तरं गताः-अचिरेणैव प्रत्यागमिष्यन्ति-...वाणिज्यं मन्दं वर्तते-इतः परमेवाभिवृद्धिमियात्-इति मन्ये (एवं भाषमाणौ स्तः)

(गृहस्य-अन्तः)

क-मा : अयि वत्से ! अतीव कृशा संजाता - कृशांगीं त्वां दृष्ट्वा भ्राता महासाधुरचिरेणैव पितामहो भविष्यतीति मन्ये—

क : (सलज्जं) न-न-न-

क-मा : कुतः पद्भ्यामेवाऽऽगता ? शकटस्य किमायातम् ?

क॰: रथ्यायां जनसम्मर्दः - उत्सवदर्शनलोलुपाचाहम्-अतः शकटं परित्यज्यागतौ स्वः ।।

क-मा : बहु भाषणीयं वर्तते - भोजनार्थं सर्वं सज्जीकृतं - भुक्त्वा सावधानतया रात्रौ भाषणं कुर्वः - (आर्यपुत्राभिमुखं वीक्ष्य) आर्यपुत्र ! क्लान्तौ वत्सौ । अतः-अभ्यवहारार्थं-तूर्णमागम्यताम् ।

(इति निष्क्रान्ताः) (नेपथ्ये)

**सप्तरात्रमतीतं हि महेन्द्रस्य महोत्सवे**
**अप्रमत्ता जनास्सर्वे वर्तन्ते शक्रपूजने । 16**

(श्वशुरगृहे-आसनस्थः-ततः प्रविशति गोवलः)

गो : (आत्मगतं) किं दिनसप्तकमतीतं? पूर्वेद्युरेवाऽऽगतमिवाऽऽभाति ।

क : (क्षीरभाजनहस्तागत्य) आर्यपुत्र! चिन्ताक्रान्तमना इव लक्ष्यसे?

गो : ऊम्-बहूनि दिनान्यतिक्रान्तानि-प्रतिगन्तव्यम् ।

क : जननी तावदत्रैव स्थातव्यमित्यभिलषति—

गो : तर्हि त्वमत्रैव स्थित्वाऽऽगच्छ-मया श्वः परश्वो वा गम्यते—

क : तर्हि मयाप्यागम्यते—(क्षीरभाजनं प्रयच्छति ; परंतु भाजनं भूमौ पतति)

("स्वामिन् ! नमस्ते"-इति द्वारि श्रूयते)

गो : अन्तरागच्छ ! कः ? (विमृश्य) सेवको मधुग्रीवः - किं संवृत्तं गृहे ? का वार्ता ?

(ततः प्रविशति मधुग्रीवः)

मधुग्रीव : गृहकार्यनिर्वाहकः शम्भुशर्मा भवन्तं द्रष्टुकामो गृहे वर्तते । अत आगतोऽस्मि ।।

गो : तर्हि प्रस्थितोऽस्मि-यथाभिलाषं स्थित्वा त्वमागच्छ-पूज्यवृद्धेभ्यो निवेदय - चिन्ता मास्तु । (मधुग्रीवेण साकं प्रस्थितो गोवलः) (गोवलगृहप्राङ्गणे शम्भुशर्मा चिन्ताक्रान्तस्तिष्ठति-प्रविश्य)

गो : स्वामिन् ! किमायातं ? किं संवृत्तम् ?

शं-श : गोवल ! किंचिदिवाऽप्रियं संवृत्तम् !

गो : अपि तातपादा देशान्तरे कुशलिनः ? (ससंभ्रमं पृच्छति)

शं-श : कुशली वर्तते-स परश्व आगमिष्यति-परंतु नौका जले निमग्ना!

गो : हा हतोऽस्मि । पण्यभरिता वा, आहोस्वित् प्रतिनिवर्तमाना धनपूरिता वा ?

शं-श : पूर्वेद्यू रात्रौ समुद्रतीरात् क्रोशद्वयदूरे देशान्तरात्-प्रतिनिवर्तमाना नौः प्रचण्डमारुतेन पीडिता जले निमग्ना-पंचनाविका आसन्-बाहुतरणं कृत्वा तीरमागतास्सर्वे-परंतु नौकायां स्थितं विपरिणामलब्धं पण्यं-इतरत्स्वर्णादिकं सर्वं नष्टम्. (हस्ततलं निपीडयति) विनष्टं सर्वमस्मदीयं न भवति ।।

गो : कोवाऽस्मदंशः स्यात् ?

शं-श : चतुर्थांशोऽस्मदीयः-नियुतद्वयं स्यादिति मन्ये ।

गो : एवं - (विचिन्त्य) तर्हि - एतत्सर्वं वाणिज्यलाभे नष्टत्वेन विलिख्यताम् - ये तावत्प्रतिनिवृत्ता नाविकास्तेभ्यः प्रत्येकं शतनिष्कं दीयताम् ।। अहो दैवगतिः ?

शं-श : चिन्ता मास्तु - वयं किं कुर्मः ? आयव्ययौ दैवायत्तौ । जनन्यै निवेदनीयं वा न वा ?

गो : मास्तु । तातपादानामागमनानन्तरं निवेदनीयम्—

शं-श : तर्हि श्वो द्रक्ष्यामः ।

गो : अथ किं ! (शम्भुशर्मा निष्क्रान्तः) (चिन्तानिमग्नः) गतमासेऽप्येवमेवासीत् ! देवेषु किं वापराद्धं मया ? अहो दैवगतिः !

(मधुग्रीवः प्रविश्य)

म-ग्री : देव-माठरार्य आगतः ।

गो : प्रवेशय—

मा-य : वत्स ! कुशली वर्तसे ? (गोवलमुखे विवर्णभावं दृष्ट्वा) किं ? उद्विग्नमना इव लक्ष्यसे ?

गो : किमपि न-किंचिदिव श्रान्तोऽस्मि ! अतः......

मा-य : मधुग्रीवमुखात् ज्ञातम्-वाणिज्ये-गतिः-आगतिश्च नैसर्गिकी-तावता निरुत्साहो माभूः ।

गो : गतमासेऽप्येवमेवासीदिति खिन्नोऽस्मि ।

मा-य : विपदि धैर्यं महतां स्वतस्सिद्धम्-आगामिनि वत्सरे दशगुणितो लाभःस्यात्-जगद्रक्षक आपद्बान्धवो लक्ष्मीनृसिंहः ॥ अतस्तमाराध्य सुखं प्राप्नुहि-अन्यदा पुनरागमिष्यामि—

(इति निष्क्रान्तः)

(नेपथ्ये)

ऐन्द्रीमुखे वासवदर्शनेप्सुः
"पाकस्य हन्ता न च दृश्यतेऽत्र
ऐन्द्रोत्सवे स्यादि" ति मन्यमानो
राकाशशांको द्रुतमागतोऽत्र ॥ 17

गो : अहो! अद्य राका-किमु? (सविस्मयं) इन्द्रोत्सवमासोऽपि समाप्तः! ऊं-दिनानि द्रुतं पलायन्ते! कण्णकी नागता! सा ज्वरपीडिता वर्तते - गृहं शून्यमिव वर्तते । वाणिज्ये च पदे पदे द्रव्यनाशः - तातोऽपि नागतो विदेशात्-अतीव दुःखितोऽस्मि - निद्रापि दूरत एव तिष्ठति-पत्तने च महोत्सवः । कथं वाऽऽत्मानं विनोदयामि? ("भो वयस्य! कथमेकाकी वर्तसे" इति वदन् श्वेतस्वामी प्रविशति) (आत्मगतं) वयस्यस्समागतः - (प्रकाशं) स्वागतं मित्रमणे!

श्वे-स्वा : किमतीव कृशोऽसि? किं वा संवृत्तम्?

गो : किमपि न—

श्वे-स्वा : तर्हि कुत एवं चिन्ताक्रान्तचितता? महोत्सवसन्दर्शनेनात्मानं विनोदय—

गो : न मे मनस्तत्र लीनं भवति—

श्वे-स्वा : तर्हि माधवीनाट्यदर्शनार्थं गच्छावः - अद्य खलु तस्या नाट्याङ्गीकारः!

गो : (साश्चर्यं) एवं वा - मया विस्मृतं तत्!

श्वे-स्वा : तदर्थमेवाऽऽगतोऽस्मि - एहि गच्छावः—

गो : अथकिम् ।

(ततः प्रस्थितौ कतिपयपदानि गच्छतः)

(नेपथ्ये)

**"अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः"**

गो : (आत्मगतं) किमिदमकाण्डे तत्त्वोपदेशवाक्यश्रवणम् ? (क्षणं विचिन्त्य) अद्यानध्यायः खलु ! वेदाध्यापनं विहाय माठरार्याः काव्यपाठनं कुर्वन्ति । (पुनः कतिपयपदानि गच्छतः-नेपथ्ये) "आगन्तव्यमागन्तव्यम् ! अधुनैव माधव्या नाट्यारम्भो भवति"- इति नाट्याचार्यवाक्यं श्रूयते—

गो : कथं? नाट्यरङ्गं प्राप्तौ स्वः ! इदं नाट्यरङ्गस्थलं ? एहि प्रविशावः ! आवां द्वितीयश्रेण्यामुपविशावः - (एवं नाट्येन कुरुतः) (ततः प्रविशति नाट्यरङ्गे नाट्याचार्यः)

नाट्याचार्यः : नमो महद्भ्यः ! भो महाजनाः - विदितपूर्वा वारमुख्या कुलकूटस्था माधवी - ।। अधुना विद्यमाना माधवी तद्रूपगुण तुल्येति मन्यामहे ।। सभ्या मधुकरा इव तस्या नाट्यपुष्पे विद्यमानमल्पमपि गुणरूपं मधु गृहीत्वाऽस्माननुगृह्णन्तु ।। प्रथमतः त्रिविक्रमावतारनाट्यप्रदर्शनं भवति । आगता चात्र माधवी - (इति निष्क्रान्तः)

(ततः प्रविशति माधवी - सदस्यान् नमस्कृत्य नृत्यारंभं कृतवती) श्लोकः !

**"कस्त्वं वर्णिन् ?" "वटुरहमिमं प्राप्तवानस्मि यज्ञम्"!**
**"कस्ते कामो"? "भुवमिह मितां पादकैस्तु त्रिभिर्मे**
**याचे त्वत्तोऽसुरकुलपते"! "प्रीतिपूर्वं प्रदास्ये"**
**दत्तं स्थानं पदकयुगलं यस्य तस्मै नमोऽस्तु ! 18**

(अभिनयं कृत्वा निष्क्रान्ता - सभ्याः सर्वे सहस्तताडं हाहाकारं कृतवन्तः)

ना-आ : (आसनादुत्थाय) इतः परं त्रिपुरदाहाभिनयप्रदर्शनं भविष्यति ! (रंगं प्रविशति माधवी)

**श्लोकः "यस्याश्वा वेदराशिः श्रुतिपदचतुरः पद्मभूर्यस्य यन्ता**
**देवानां चापि संघो वरगमनरथस्स्वर्णसानुश्च धन्व ।।**

**अग्निस्सोमोऽथविष्णुस्समरसहकरस्सायकः पौरदाहे**
**तस्मै कुर्मः प्रणामं स भवतु शुभदः कामधक्कामधुङ्नः" ।।**
**19**

(निष्क्रान्ता माधवी)

ना-आ : भोः - सदस्याः - बहुकार्यव्यापृतो महाराजश्चोलभूपतिः - अतो नागतः-अमात्यमुखेन पारितोषिकं प्रेषितं वर्तते-अमात्यवर्यं इदानीं माधवीं पुरस्कारेण संमानयति ।।

अमात्य : (उत्थाय) नमो महद्भ्यः - नाट्याचार्येण सुशिक्षिता माधवी-स्वयं च नाट्यप्रसिद्धे कुले जाता-प्रथमप्रदर्शनमतिश्लाघनीयं वर्तते-मुदितमनसो महाराजाः पारितोषिकत्वेनेमां स्वर्णमालां प्रेषितवन्तो मन्मुखेन ।। अनया मालया तां संमानयामः ।। (माधवी नतिपूर्वकं मालां प्रतिगृह्णाति ।। सर्वे हस्ततांड कुर्वन्ति ।। ततो रङ्गात्सर्वे निष्क्रान्ताः)

श्वे-स्वा : (आत्मगतं) गोवलोऽतीव सन्तुष्ट इवाऽऽभाति - चिन्ता च मनसो निष्क्रान्तेति मन्ये - (प्रकाशं) नृत्यं कथं वर्तते ?

गो : सदा मन्तव्येयं माधवी - तस्या वर्णने कालिदास एव समर्थः ।

श्वे-स्वा : कुतः कालिदासः ? न कोऽपि समर्थः ।। - तादृशं सौन्दर्यं तस्याः ।।

गो : पुरा कालिदासेन शकुन्तलावर्णने दुष्यन्तमुखेन यदुक्तं - "अनाघ्रातं पुष्पं" इति, तत् तदा–शकुन्तलावर्णने–अतिशयोक्तिः स्यात्! अधुना तु स्वभावोक्तिः ॥

श्वे-स्वा : (विहस्य - आत्मगतं) उभयत्रापि भ्रान्तिमदुक्तिः !

गो : कालातिक्रमो जातः! एहि गच्छावः ॥

॥ इति निष्क्रान्तौ ॥

॥ द्वितीयोऽङ्कः ॥

## ।। तृतीयोऽङ्कः ।।

(ततः प्रविशति क्षीरपूर्णपात्रहस्तो मधुग्रीवः)

**म-ग्री :** आज्ञप्तोऽस्मि तत्रभवत्या कण्णक्या-यथा-"अद्य सोमवारः-अतः कपिलाक्षीरं सोमशेखरस्याभिषेकार्थं दत्वा प्रत्यागच्छ"-इति-।। परंतु मम मनस्तस्मिन्विषये नैव प्रसरति-किं कुर्याम्? गृहस्वामी माधवीदासः संवृत्तः । तथापि कण्णक्याभिषेकादिकं क्रियते - अहो संप्रत्ययस्तस्याः पुण्यकर्मसु! (कानिचित्पदानि गच्छति) (दूरादागच्छन्तीं नराकृतिं दृष्ट्वा) (विमृश्य) कापि पत्रहस्तागच्छतीति मन्ये ।। कापि दृष्टपूर्वेव भाति ।। का सा? मन्ददृष्टिः-स्मृतिभ्रंशः । सर्वं वार्धकचिह्नम्! (एतस्मिन्नन्तरे साव्यक्तिः समीपमागता) (विलोक्य) हो-वसन्तमाला! अयि सुन्दरि-अपि कुशली मम स्वामी?

**व-मा :** कुशलमिव - तेनैव प्रेषितास्मि ।

**म-ग्री :** किमर्थं? कुत्र वा गम्यते?

**व-मा :** "मदीयगृहे-आभरणपेटिकायां यानि वर्तन्ते स्वर्णरत्नाभरणानि तानि सर्वाणि कण्णकीसकाशात् आनय"-इति-आज्ञप्तास्मि-तदर्थमिदं पत्रमपि दत्तम् ।। (पत्रं दर्शयति)

**व-मा :** (आत्मगतं) अहो क्लिष्टा गतिः (प्रकाशं) त्वमतीव रमणीया वर्तसे! तव किमर्थमियं-सेवावृत्तिः? त्वदीयस्वामिन्या वृत्तिं त्वमपि स्वीकुरु । महान् द्रव्यलाभो भवेत् (हि-हि-हि-हसति)

**म-ग्री :** हन्त! नाहं तादृशकुले जाता! क्षुधितापि व्याघ्री तृणानि नैव खादेत् (सकोपं) तव जिह्वाछेदनं कुर्यां यदि पुनरेवं भाषसे ।। कण्णक्यास्सकाशे तव दुर्भाषणं निवेदयामि (तर्जन्या तर्जयति)

**म-ग्री :** (सकंपं) मास्तु मास्तु-क्षमस्व-क्षमस्व-(किंचिद्विरम्य) कथं वा मम स्वामी माधवीदासः संवृत्तः?

व-मा : दुःखार्तस्तवस्वामी श्वेतस्वामिना साकं माधवीप्रथम नाटचप्रदर्शनसंदर्शनेनात्मानं विनोदयितुमागतः। ततः किं ? कूपे पतितः !

म-श्री : अहो कष्टं । किं वा दत्तं स्वामिना प्रथमतः ?

व-मा : प्रथमतः - तव स्वामिना सहस्रनिष्कं दत्तम् !

म-श्री : तदा प्रभृति तत्रैव वर्तते । क्रयविक्रयव्यवहारार्थमपि गृहं प्रति नागच्छति - हुं - पत्रहस्ता गृहं गच्छ त्वं - पात्रहस्तोऽहमपि देवमन्दिरं गत्वा प्रत्यागच्छामि ।। (विरम्य) अयि वसन्तमाले ! अद्य वा श्वो वा माठरयज्वा शंभुशर्मणा साकं गोवलदर्शनार्थं तत्रागमिष्यति-माधव्यै मा कथय ।।

व-मा : यः कोऽपि वाऽऽगच्छतु-तावता किं नश्छिन्नं-तव स्वामी नैव प्रत्यागमिष्यति !

(इति निष्क्रामतः)

।। प्रवेशकः ।।

(ततः प्रविशतो माधवीगोवलौ)

(गृहप्रांगणे-उपविष्टौ भाषमाणौ स्तः)

गो : अयि माधवि ! तव दर्शनं पुण्यपुरुषाणामेव लभ्यम् । "पूर्णेन्दु-वदनानां नारीणां प्राप्तिः शिवपूजायाः फलं" इति सन्तो-वर्णयन्ति । मत्पूर्वपुरुषाः शिवार्चनतत्पराः !

माधवी : (आत्मगतं) अहो मोहः । (प्रकाशं) तथा सति पुण्यपुरुषा एवास्यां वीथ्यां-अस्मदादीनां गृहेषु च संचरन्तीति भवतामाशयः । एवं वा ?

गो : तत्र कः सन्देहः ? कृतपुण्यानामेव रूपवत्यो नार्यश्शक्यलभ्या भवन्तीति लोकप्रसिद्धिः। (माधवीमंके-आरोप्य) प्रिये त्वं हि—

**मेनकाद्यास्तु या नार्यो नाकलोकवरांगनाः**
**त्वत्तष्षड्भागमादाय निर्ममे ताः प्रजापतिः । 1**

मा : (विहस्य) नहि घृतान्नवनीतोत्पत्तिः ! नवनीतादेव खलु घृतनिष्पत्तिः !!

गो : तव विषये वैपरीत्यम् !!!

मा : तदस्तु-कथं षष्ठांशमादायेति ?

गो : तत्र कारणं वर्तते-लोके राजा षष्ठमंशं करत्वेन गृह्णाति-तद्वत् लोकस्रष्टा त्वदीयं षष्ठमंशं करत्वेनाऽऽदाय ताः निर्मितवान्- (हि-हि-हि-हसति)

मा : आः - अतिप्रसंगेनालम् - (सापि हसति)

गो : अद्य सर्वाण्याभरणान्यागमिष्यन्ति - तैस्त्वामलंकृत्य (इत्यर्धोक्तौ विरमति)

मा : अलं - अलं - ततः परं भवन्तः किं कुर्युरिति विदितमेव

गो : सम्फुल्लपुष्पभरिताभिर्लताभिः संवेष्टितां यष्टिमिव त्वा-मद्याचिरेण द्रक्ष्यामि ! अहो मम भाग्यातिशयः !

**एकराशिगतैः खेटैर्गुरुशुक्रशनैश्चरैः**
**शशिभौमयुतैर्यद्वद् भासेत रजनीमुखम् । 2**
**तत्समां भासमानां त्वां नानारत्नविभूषणैः**
**दृष्ट्वाहं प्राप्नवान्यद्य नेत्रनिर्वाणमेव हि । 3**

(सानन्दमुत्पतति)

मा : यदि भूषणानि न प्रेषितानि......

गो : परशुना तस्याश्शिरश्छिन्द्याम्—

मा : मदर्थं स्त्रीहननं न युक्तम् !

(ततः प्रविशति वसन्तमाला पेटिकां गृहीत्वा - शंभुशर्मा-प्याऽऽगच्छति)

गो : (वसन्तमालां पृच्छति) किं सर्वाणि दत्तानि ?

व-मा : एवं-सर्वाणि दत्तानि - (शर्माणं निर्दिश्य) स्वामिनः सर्वं वदन्ति ! (इति निष्क्रान्ता)

गो : (शंभुशर्माणं प्रति) भवन्त उपविशन्तु ! (माधवीं प्रति) प्रिये ! इमानि विभूषणानि गृहीत्वा - तैरात्मानमलंकृत्य - नानाकुसुमैः केशप्रसाधनं च कृत्वा सन्नद्धा भव-समुद्रतीरं गच्छावः ।। (आभरणानि स्वीकृत्य सा निष्क्रान्ता)

गो : किं स्वामिन् ! किमर्थं भवतामागमनं ? अत्र भवदादीना मागमनं नैव युक्तम् ।।

शं-श : सर्वाण्याभरणानि प्रेषितानि - तानि भवन्निकटे निवेदयितु-मागतोऽस्मि ।।

गो : पेटिकास्थानि कात्स्न्र्येन प्रेषितानि वा ? आहोस्वित् छिन्नाणि तयापहृतानि वा ?

शं-श : न केवलं पेटिकागतानि-अपि तु शरीरगतान्यपि कण्णक्या दत्तानि-नूपुरद्वयं तु न प्रेषितम् ।

गो : कुतः ?

शं-श : अन्यतरस्थ नूपुरस्य पादघातेन लेशतो वक्रत्वं सञ्जातम् ! तत्समीकरणार्थं नाडिन्धमाय दत्तम् । अतो नूपुरद्वयं न प्रेषितं - (विरम्य) कदा वा पुनर्ग्रहणार्थमागन्तव्यम् ?

गो : (विहस्य) कस्य पुनर्ग्रहणार्थम् ?

शं-श : (साश्चर्यं) आभरणानामेव—

गो : (सकोपं) नैवागन्तव्यम् ॥......आभरणानामहमेव स्वामी - न तु भवान् - नापि कण्णकी !

शं-श : (सकंपं) वत्स ! तत्र न सन्देहः - बहुमूल्यानि चिरकाल संचितानि कुलधनभूतानि वारवनितायै न देयानि - एषा मम मतिः—

गो : द्विजवर्य ! नाहमर्जुनः - नापि भवन्तो गीताचार्याः । इयमपि नैव युद्धभूमिः - तूष्णीं गम्यतां-..... [शंभुशर्मा तूष्णीं तिष्ठति-कृच्छ्रेण प्रस्थितः-शनैश्शनैर्गच्छति]

गो : (विचिन्त्य) स्वामिन् ! (शर्माणमाह्वयति) (सोऽपि प्रतिनिवृत्तः) तत्र गृहे सर्वाणि कार्याणि भवतैव निर्वर्त्यन्ताम् ! तत्र प्रतिमासं देयानि-पशुभ्यस्तृणानि-दीपार्थं तैलं-अनाथकुमारेभ्यो भोजनं - एवमादीनि सावधानतया निर्वर्तनीयानि - कस्यापि सत्कार्यस्य लोपो मास्तु ॥

शं-श : सर्वं तथैवानुष्ठीयते-कदा वा भवन्तो गृहमागच्छन्ति ?

गो : किमर्थं ? क्रयविक्रयव्यवहारे मदीयहस्ताक्षरापेक्षा वर्तते वा ? तथासति पत्राणि प्रेष्यन्ताम् ॥ हस्ताक्षराङ्कितानि कृत्वा पुनः प्रेषयामि—

शं-श : न-न-(विरम्य) गृहे सहधर्मिणी वर्तते—

गो : ताततुल्या भवन्तस्तां रक्षन्तु - ततः किं ?

शं-श : (आत्मगतं) वारवनितासर्पदष्टोऽयं जनः ।। मोहहालाहलः शिरःपर्यन्तं व्यापृतः - (प्रकाशं) तर्हि प्रस्थीयते - अत्र चिर-कालवसतिर्मास्तु ।।

गो : अहं सर्वं जानामि - प्रस्थीयताम् ।। (सकोपं वदति)
(शम्भुशर्मा निष्क्रान्तः - कानिचित्पदानि गच्छति)

शं-श : (आत्मगतं) अहो कालविपर्ययः-क्रयविक्रयव्यवहारे धनहानिः- जनानां मध्ये मानहानिः - । अधुना तु बहुमूल्यान्याभरणान्यपि- गोवलः पाणिगृहीतया संयच्छते - (निमग्नहृदयो गच्छति)

(पुरतः श्वेतस्वामी - आगच्छति)

श्वे-स्वा : (उच्चैः) स्वामी कुतः प्रतिनिवर्तते ? पुरत आगच्छन्त-मपि मामदृष्ट्वैव गच्छति स्वामी !

शं-श : (निरूप्य - आत्मगतं) हो - श्वेतस्वामी - (प्रकाशं) गोवलं दृष्ट्वा प्रत्यागतोऽस्मि—

श्वे-स्वा : एवं वा - अहमपि तं द्रष्टुकामोऽस्मि—

शं-श : तत्र गमनं मास्तु-माधवीमोहोऽतीव वर्तते-प्रतिनिवर्तनमति-स्तस्य स्वप्नेऽपि नोदेति—

श्वे-स्वा : अहो मोहस्य माहात्म्यं ! एवं सति-अचिरेणैवाकिंचनो भवेद्वयस्यः - अहो मन्दभाग्या कण्णकी !

शं-श : मयापि तथैव चिन्त्यते-दैवबलादेव गोवलः प्रत्यागन्ता ; न तु मनुष्यप्रयत्नेन-कार्त्तिकेयप्रसादेन दम्पत्योः पुनस्समागमः स्यादिति मन्ये—

श्वे-स्वा -  एवं-एवं-कार्त्तिकेये कृता अभ्यर्थना मोघा न भवन्ति—

शं-श :  किं भवतापि भगवन्माहात्म्यमंगीक्रियते—?

(ततः प्रविशति माठरयज्वा)

मा-य :  (आत्मगतं) श्वेतस्वामिना साकं शंभुशर्मा भाषमाणो वर्तते - को वा विशेषः स्यात् ? (प्रकाशं) शर्मन् ! तव स्वामी कथं वर्तते ? तं द्रष्टुं प्रस्थितोऽस्मि - (श्वेतस्वामिनं दृष्ट्वा ।) (साश्चर्यं) कथं श्वेतस्वामी ? कोऽयं विपरिणामो भवति ? ललाटे सिता भूतिः ! हस्ते फलपुष्पाणि ! देवमन्दिरं प्रति गम्यते वा ?

श्वे-स्वा :  अद्य कृत्तिकानक्षत्रं खलु ! कुमारस्वामिनमाराधयितुं प्रस्थितोऽस्मि ।।

मा-य :  कुतो वल्ली नागता ? लोकायतवादिनो भवन्तोऽपि देवाराधने प्रवृत्ताः - महान् मोदः—

श्वे-स्वा : वल्ली नागता (सलज्जं) सा किंचिदिवाऽऽरोग्यविहीना वर्तते ।

मा-य :  अनारोग्यकारणं किम् ?

श्वे-स्वा :  अतीव कृशा वर्तते-पौनःपुन्येन वमनं करोति-अशनेऽरुचिः-एवं वर्तते—

मा-य :  (आत्मगतं) दौहृदलक्षणमेतत् ! (प्रकाशं) तर्हि साऽन्तर्वत्नी-स्यात् - चिन्ता मास्तु—

श्वे-स्वा :  तथैव तर्कयामि - भवतामनुग्रहः - गोवलविवाहदिने भवतां दर्शनमभूत् - भवत्सकाशाल्लब्धानुग्रहा सान्तर्वत्नी जाता ! सर्वोऽपि षाण्मातुरस्य प्रसाद एव—

मा-य : एवमेवं - तत्र कः सन्देहः !

**पंचाननो यस्य पितापि शिष्यो यस्मिंश्च मूकश्चतुरास्यवृद्धः**
**यत्पादसेवा विधिहस्तबद्धं मूर्धाक्षरं नाशयतीह लोके । 4**

तादृशमहिमोपेतः षण्मुखो देवसेनापतिः सर्वेषां सर्वदा सर्वं-कामप्रदः - हुं - शर्मन् ! भवतां युवराट्—गोवलः कथं वर्तते ?

शं-श : किं वदामि - सर्वं भवता विदितमेव ।। नीरक्षीरमिव तया संगतो वर्तते ।।

मा-य : तर्हि हंसापेक्षा वर्तत इति मन्ये—

शं-श : विभूषणान्यपि दत्तानि - प्रतिमासं पण्यपूर्णनौका निमग्ना भवति - शोकदीनार्तहृदया कण्णकी विनिद्रा वर्तते-प्रत्यागमन चिन्तापि तस्य नास्ति-तत्र कोऽप्युपायश्चिन्त्यः ।।

मा-य : सर्वं दैवाधीनमेव-अहो कालविपर्ययः-अयं हि गोवलः पुरा दीनेभ्यो बहुधनं दत्तवान्-तथाहि—

**सर्पस्य हन्तुर्नकुलस्य हन्त्रीम्**
**भर्त्रा विसृष्टां द्विजवर्यपत्नीम्**
**एनोविमुक्तां बहुदानहोमैः**
**कृत्वा वधूटीं प्रददौ च भर्त्रे ।। 5**

स्वकीयद्रव्यव्ययं कृत्वा यः स्वयं वियुक्तदम्पत्योः संगमहेतुरभूत्-स एव धनव्ययंकुर्वन् स्वजायया वियुक्तो वर्तते । भवतु वयं किं कुर्मः-धर्मव्ययशील एवं संवृत्त इति भृशं शोचामि ।।

शं-श : इदानीमपि "सत्कार्याणि यथापूर्वं कार्याणी"ति तेनाऽऽज्ञप्तोऽस्मि ।। तथैव निर्वर्त्यन्ते च ।।

**श्वे-स्वा :** अहमेव माधवीनाट्यदर्शनार्थं शोकमग्नं तं गोवलं तत्र नीतवान् ।। परंत्विदानीं वैपरीत्यं संवृत्तम् !

**मा-य :** न-न-स्वकीयं कर्मैव स्वेनानुभूयते ।। तत्र नराणां कारणत्वं नास्ति ।। कण्णक्या किंचिदिव शुभेतरं पूर्वस्मिन् जन्मन्यनुष्ठितं स्यात् ।। तस्य फलं भर्तुर्विमुखता ।। कालक्रमेण सर्वं शुभोदर्कं भवेदिति मे मतिः ।

**शं-श :** तथैव वयमपि मन्यामहे-कालातिक्रमो भवति-मया प्रस्थीयते ।। कण्णकी शोकापाकरणार्थं गृहं प्रति नूनमागन्तव्यं भवता ।।

**मा-य :** अथ किम् ।। (सर्वे निष्क्रान्ताः)

।। तृतीयोऽङ्कः ।।

---

## ।। चतुर्थोऽङ्कः ।।

(ततः प्रविशति खनित्रहस्तो मधुग्रीवः-हस्तेन निरूपयन् स्वयं भाषमाणः)

**म-ग्री :** उद्यानेऽस्मिन् कुल्यानां-आलवालानां च-समीकरणं कर्तव्यम् । गृहस्वामिनोऽभावो लतागुल्मदर्शनेनैव सूच्यते । अहो वैपरीत्यम् । कुल्यासु पादपेभ्यः प्रसारितं जलं प्रतीपं प्रवहति । कालस्य वैपरीत्यं किमु? (इतस्ततः संचरन्) उद्याने कण्टकगुल्मतृणानि, अतिप्रवृद्धानि । तेषां छेदनं कुल्यासमीकरणं चाचिरेणकर्तव्यम् ।। एवं शर्मणाऽपि पूर्वेद्युराज्ञप्तोऽस्मि । (पुनरपि संचरन्) अय. बालचूतवृक्षः सम्पुष्पितमालतीलतया संवेष्टित आसीत् ।। अधुना तु सम्फुल्लमाधवीलतया संवेष्टितो दृश्यते । मालती तु माधवीसंछन्ना सती म्लाना-पुष्पविहीना - कान्तिरहिता च संवृत्ता ।। मालतीलतासकाशात् पुष्पाणि माधवीलतायां संक्रान्तानीव ।। न केवलं मालती म्लाना-चूतोऽपि माधव्या समाक्रान्तस्सन् न्यग्भावं प्राप्तः । (नाट्येन कुल्यानां-आल-वालानां समीकरणं कुर्वन्-सकोपं-उच्चैः) खनित्रेण माधवीछेदनं करवाणीति मनीषा वर्तते ।। तथा सति मालती संरक्षिता भवेत्; चूतोऽपि वृद्धिमियात् ।।

(उद्यानं ततः प्रविशति कणकी)

**क :** मधुग्रीव! कस्य छेदनं कर्तुमुद्युक्तोऽसि ?

**म-ग्री :** (खनित्रं भूमौ निधाय - अञ्जलिं बद्ध्वा) अम्ब ! माधव्याः ...... सा मालतीं समाक्रम्य चूतवृक्षं समाश्रिता ।। तया मालत्या-श्चूतवृक्षस्य च हानिः ।। अतः......

**क :** (आत्मगतं) अत्रापि माधवीवार्ता किमु? (प्रकाशं) कुसुम भरितलताछेदनं न युक्तम्; यदि कुर्यास्तव हस्तछेदनं कुर्याम् ।

म-ग्री : (सविनयं) तथैव - अंब - तथैव - यथाज्ञप्तम् ।

(ततः प्रविशति चेटी)

चेटी : अंब-तत्रभवतीं द्रष्टुं देवन्तिकाऽऽगता ।।

क : अत्रैवानीयताम् ।

(निष्क्रम्य चेटी-देवन्तिकया पुनः प्रविशति)

देवन्तिका : हला कथं वर्तसे ? (चेटी निष्क्रामति)

क : (अश्रूणि मुञ्चति) हला (सगद्गदं) किं वच्मि!!

दे-का : (साप्यश्रूणि मुञ्चति) हला-तवापीदृशी गतिः ।

(चेलान्तेनाश्रूणि परिमृजति)

क : हला-देवन्तिके ! तव भर्ता पुण्यतीर्थेषु स्नातुं गतः पंचभ्यो हायनेभ्यःप्राक् । अद्यावधि न प्रत्यागतः । यत्र कुत्रापि पुण्यतीर्थेषु स्नानं कुर्वन् पापापनोदनं कुर्वन् वर्तते ।। मम भर्ता तु तद्वैपरीत्ये वर्तते ।।

(पुनरप्यश्रूणि मुञ्चति)

दे-का : समाश्वसिहि-मयान्वहं श्रीगजाननस्यार्हणा क्रियते - इमा दूर्वाः स्वीकुरु । वरदमूर्तेः प्रसादादचिरेणैव प्रत्यागन्ता तव भर्ता ।। (दूर्वाः प्रयच्छति-साप्रतिगृह्णाति) हला किं स्वर्णवलयशून्यहस्ता

वर्तसे ? (तस्याः शरीरं सम्यक्-विलोक्य)

हन्त किमप्याभरणं शरीरे नास्ति । किमायातम् ।।

क : सर्वमन्तर्वर्तते-विरहिताया मम तेष्वासक्तिर्नास्ति ।।

दे-का : (आत्मगतं) एषा सत्येतरद्वदति-सर्वाण्याभरणानि माधव्या-पहृतानि ! अहो ! अस्या भर्तृभक्तिः ! तत्कृतं दुश्चेष्टितम-प्यपगूहति । ( प्रकाशं ) केशप्रसाधनादिकं मास्तु ; कुतो मलिनवस्त्रता? अशोकवनगता शोकभरिता सीतेव दृश्यसे।।

क : सीता रावणेनासुरेणापहृता ।। ममार्यपुत्रस्तु कामान्धकारा-सुरेणापहृतः; किं कुर्मः ? मत्कर्मविपाकफलं नूनमनुभोक्तव्यं खलु ।। स तत्र सुखी वर्तत इति स्मारं स्मारं निर्वृतिमुपलभे । पत्युर्मोद एव ममापि प्रमोदः -

दे-का : मम कश्चनोपायो बुद्धिस्थो भवति-कावेरीसमुद्रसंगमप्रदेशे-सोमतीर्थं-अर्कतीर्थं इति द्वे तीर्थे स्तः । तयोः स्नात्वा-तत्रविराज-मानं कामदेवं च संपूज्य भर्तृविरहिता नार्यः संचितभूरिपापा अपि भर्त्रा संगता भवन्तीति मातुलमुखादवगतम् । अतः श्वः परश्वो वा मया गम्यते-त्वमप्यागच्छ ।।

क : पतिदेवतानामस्माकं तथा करणं न युक्तम्-उपभोगैकशाम्यं खलु जन्मान्तरार्जितमेनः - अन्वहं जननी - अत्रागत्य मामाह्वयति- "गृहमागच्छे"ति-।। एवं श्वशुरपादा अपि-कुत्रापि गमनं मह्यं न रोचते ।। अपि च ।। पूर्वेद्यू रात्रौ मया दारुणः कश्चन दुःस्वप्नो दृष्टः । ततश्च मम शोकः प्रवृद्धः ।।

दे-का : कीदृशः स्वप्नो दृष्टः ?

क : अस्मात्पत्तानात्-भर्त्रा साकं प्रस्थिताहं नगरान्तरं प्राप्तवती-तत्रत्याः पौरा आवयोरलीकवचनान्यारोपयन् ।। तत आर्यपुत्र उलूकगृहीतः कुत्रापि नीतः । ततः परं तद्देशे महान् विप्लवस्समजनि ।। प्रकाशरहितश्चन्द्रमा मया दृष्टः - ततः प्रबुद्धास्मि ।। हला किं कुर्याम् ?

दे-का : अयि-स्वप्नकृतश्शोकस्त्वां नैव स्पृशतु ।। त्वत्प्रियस्त्वां नैव परित्यक्तवान्-जन्मान्तरे त्वया कर्तव्यः कश्चन भर्तृपूजाविशेषो

विस्मृतस्स्यादिति मन्ये ।। तदुत्पन्नोऽयं दोषः-इति मे प्रतिभाति ।। चिन्ता मास्तु ।। अचिरेणैव तव भर्ता प्रत्यागन्ता-मया प्रस्थीयते-भर्त्रागमनानन्तरं चेटीं प्रेषय ।। अहं पुनरागमिष्यामि (इति निष्क्रान्ता)

(ततः प्रविशति शंभुशर्मा)

शं-श : (प्रविश्य) (सर्वत्रावलोक्यात्मगतं) अहो गृहस्य कला-विहीनता ! पिपीलिका अपरस्परास्सर्वत्र संचरन्ति ।। भित्तिषु-ऊर्णनाभीनां तन्तुवयनक्रिया निश्शङ्कं प्रचलति ।। गृहप्राङ्गणभूमिः-आखूनां नृत्यरंगस्थलमभूत् ।। मक्षिका महोत्सव-स्सर्वत्र प्रवर्तते ।। अचलाप्यचलाभा श्रीः स्वाभाविकं चांचल्यमनु-वर्तमाना क्रममाणेव दृश्यते ।। अहो मन्दभाग्यता गृहस्वामिनः ! (अत्रान्तरे-उद्यानात्-प्राङ्गणमागच्छति कण्णकी)

क : महाभागैरागतं वा ! उपविशन्तु ।।

शं-श : वत्से ! त्वां दृष्ट्वा मम मनोऽतीव खेदं प्राप्नोति । किरीटालंकारयोग्यं रत्नं पांसुले स्थले वर्तते ।। पूर्वेद्युरपि गोवलो मया दृष्टः ।

क : ते कथं वर्तन्ते ? अरोगशरीरा वर्तन्ते वा ?

शं-श : (आत्मगतं) रुग्णस्य गणिकागृहे वसतिर्न स्यात् । (प्रकाशं) दृढगात्रस्सुखी मोदसागरे प्लवमानो वर्तते ।।

क : अतीव सन्तुष्टास्मि ।। किमुक्तं तैः ?

शं-श : तत्र क्रयविक्रयव्यवहारे तेन साकं भाषणं कर्तव्यमासीत् । तदर्थं गतम् । प्रत्यागमनमतिस्तस्य नास्ति ।। अन्यच्च ...... (अर्धोक्तौ विरमति)

क : किमपि वक्तुकामा इव वर्तन्ते ।। परं तु कण्ठ एव गलितमिवाऽऽभाति ।।

शं-श : माधवी दौहृदलक्षणभरिता वर्तते इति वसन्तमालामुखादव-गतम् ।। अतश्चिरकालं तस्य तत्रैव वसतिः स्यादिति मन्ये ।।

क : एवं वा-महान् मोदः-सपत्न्याः पुत्रोत्सवो ममापि पुत्रोत्सव एव ।।

शं-श : द्रव्यमपि प्रेषणीयमित्युक्तम् ।

क : प्रेष्यतां विलम्बमन्तरा ।।

शं-श : द्रव्यस्यायतिरेव नास्ति - वर्षाभावे सन्तप्यमानकासारद्वारि व्ययाधिक्यं कासारस्य शुष्कताजनकं स्यात्! तद्वत्-धनव्ययोऽपि ।। आधमर्ण्यबाधोपशान्त्यर्थं गते मासे गृहद्वयं सस्यसम्पूर्णविस्तृत केदारत्रयं च विक्रीतम् ।। द्रव्यपण्यनाशः पदे पदे संभवति ।। तथापि द्रव्यापेक्षा गोवलस्य वर्तते ।।

कण्णकी : तातपादानामनुमतिं लब्ध्वा गृहान्तरं केदारान्तरं वा विक्रीय द्रव्यं प्रेष्यताम् ।।

शं-श : तथैव करोमि-परं तु-अतीव खिन्नोऽस्मि ! (ततः प्रविशति वसन्तमाला-केनचिद्वृद्धेन साकम्) (आत्मगतं) इयं वसन्तमाला पुनरप्यागता ! कोवाऽनर्थः स्यात् ? (प्रकाशं) आगच्छ वसन्तमाले-आगच्छ-कोऽयं वृद्धः ?

व-मा : महाभाग ! अयं वृद्धोऽतीव दरिद्रः-तस्य दौहित्र्याः-उद्वाहो-ऽचिरेण प्रचलिष्यति ।। दुहितुः भर्ता दिवंगतः ।। गोवलमहाभागं द्रव्यं याचितवान् । स महाभागः-"वसन्तमाले गृहं नीत्वा तस्मै पर्याप्तं द्रव्यं दापय"-इति मामाज्ञप्तवान् ।। अतस्तेन वृद्धेन साकमत्रागतास्मि ।। (वृद्धः कण्णक्याः पादयोः पतति ।। ततश्शम्भुशर्माणमपि प्रणमति)

शं-श : (आत्मगतं) अहो-आश्चर्यं ! अकिंचनोऽकिंचनकल्पं प्रभुं मत्वा याचते-(प्रकाशं) श्व आगम्यताम् ।।

क : तथा न वक्तव्यम् । यद्दातव्यं तदद्यैव दीयताम् ।। आर्यपुत्रस्याज्ञा सर्वथा पालनीया-

शं-श : (जनान्तिकं) भद्रे! कियत् दातव्यम् ?

क : भवतामविदितं नास्ति खलु ।।

शं-श : (प्रकाशं) (वृद्धं प्रति) तर्हि मया साकं धान्यविक्रयवीथीं प्रत्यागच्छ । तत्रधान्यं-द्रव्यं-वस्त्रं-स्वल्पं हिरण्यं च दास्यामः ।। वसन्तमाले-'आज्ञानिर्वर्तिता'-इति गोवलमहाभागाय निवेदय ।। (ततः शंभुशर्मा वृद्धेन साकं प्रस्थितः-वसन्तमाला च निष्क्रान्ता)

शं-श : (आत्मगतं) गोवलमेघोऽर्थिचातकेभ्यो दानवृष्टिमद्यापि वितरत्येव ।। (गच्छति) (नेपथ्ये श्लोकपठनशब्दः)

**अक्षेत्रपतितं बीजं सस्यवृद्ध्यै न कल्पते**
**यथा बुद्धिविहीनस्य तत्त्ववाक्यप्रबोधनम्** **1**

**वनमध्यगता ज्योत्स्ना कस्य वा मोददायिनी**
**अदातुश्चापि या लक्ष्मीः कस्य वा फलदायिनी** **2**

**असाधुजनसंसेवा पतनायैव कल्पते**
**दशकण्ठं समासेव्य दानवा नाशमाप्नुवन् ।।** **3**

शं-श : (कर्णं दत्वा) कथं सुभाषितानिं श्रूयन्ते! हो! माठरयज्वा शिष्येभ्यः सुभाषितानि बोधयति ।। भवतु भवतु-वृद्धाय दातव्यं धनं दत्वा गृहं प्रतिगन्तव्यम् ।।

(इति निष्क्रान्तः)

।। चतुर्थोऽङ्कः ।।

## ।। पंचमोऽङ्कः ।।

(आपणमार्गे-ततः प्रविशति वसन्तमाला)

**व-मा :** आपणे वस्तुजातं सर्वं क्रीतं, किमवशिष्टं वर्तते ? (हस्त गततालपत्रपुटस्यान्तर्विलोक्य) आः - नागवल्लीदलानि विस्मृतानि-इतरत्सर्वं वर्तते-संभारभूयिष्ठं पूर्वेद्युरेव संभृतम् ।। ("वसन्तमाले! आपणमार्गे चिन्तानिमग्ना वर्तसे किमु ?" इति पृच्छन् प्रविशति श्वेतस्वामी ।। तं दृष्ट्वा स्मेरानना) महाभाग नमस्ते । स्वामिन्या गृहे विशेषोत्सवः । तदर्थं मङ्गलद्रव्याणि-आपणे क्रीत्वा प्रतिनिवर्तमानास्मि ।।

**श्वे-स्वा :** को वा विशेषः ?

**व-मा :** ननु भवतां न विदितम् ? मम स्वामिनी स्त्रीशिशुं प्रसूतवती ।। अद्य डोलोत्सवः प्रचलिष्यति तस्य शिशोः ।।

**श्वे-स्वा :** एवं वा! (आत्मगतं) स्वातीनक्षत्रे समुद्रगतशुक्तिकायां पतितो वृष्टिबिन्दुः-मुक्ताफलं भविष्यति ।। रथ्यागतशुक्तिकायां पतितो वृष्टिबिन्दुः- रथ्योदकेन संमिश्रितो भवति-(प्रकाशं) गोवलमहाभागस्य दुहिता जाता वा! किं वा नाम धास्यन्ति ।।

**व-मा :** नाहं जाने-गोवलस्य दुहिता खलु; तस्याभीष्टं नामैव धास्यन्ति-तत्र कस्सन्देहः ?

**श्वे-स्वा :** नामकरणोत्सवः केन प्रकारेण स्यात् ?

**व-मा :** वणिक्कुलजातानां यः प्रसिद्धः प्रकारस्तेनैव प्रकारेण स्यात् ।। आह्वानपत्रिका नागता वा भवद्भ्यः ?

**श्वे-स्वा :** नागतं पत्रं-वैश्यवर्याणां प्रकार इत्युक्ते महान् द्रव्यव्ययः स्यात्! धान्यवस्त्रहिरण्यादीनां दानं दीनान्धबधिरेभ्यो भोजनं - एवमादि......

**व-मा :** एवमेवं......पूर्वेद्युश्शंभुशर्मा......सर्वं दत्वा जगाम-इति श्रुतं; अहं संभारसंभरणे निमग्नास्मि ।।

**श्वे-स्वा :** कण्णक्यपि-आगच्छति वा ?

**व-मा :** न - न - न - वैश्येतराणां कुलाचारे पाणिगृहीत्यपि तादृशोत्सवेषु सन्निहितास्यात् ।। न तु वैश्यानां कुलाचारे......

**श्वे-स्वा :** तत्राप्याचारप्रभेदो वर्तते वा - भवतु नाम ।। कदा वा कण्णक्याः पुत्रोत्सवं भवतां स्वाम्याचरिष्यति ।।

**व-मा :** (विहस्य) पाण्डवमातुः कुन्त्या इव देवतानुग्रहादेव तथा स्यात् ।। तस्याः स्मरणमपि गोवलमहाभागेन न क्रियते ।।

**श्वे-स्वा :** मैवं भाषिष्ठाः । इतिहासप्रसिद्धकथादूषणं मास्तु ।। अहो - आश्चर्यं! अस्मिन् विपुले पत्तने न कोऽपि हितोपदेष्टा तस्य न भवति वा ?

**व-मा :** गतमासे माठरयज्वना साकं तस्य जनकः-श्वशुरः-शंभुशर्मा... एवमन्ये च तत्र समागताः ।। अकुर्वन् हितोपदेशमपि ।। परंतु हितोपदेशशङ्खध्वनिर्मोहबधिरस्य श्रोत्रयोर्न पतितः ।। सर्वेऽपि धिक्कृता निस्सारिताश्च ।।

**श्वे-स्वा :** भवतु नाम ।। तव स्वामिन्याः कश्चन प्रख्यातो वीणा वादनोपदेष्टाऽऽसीत् ।। स बहोः कालान्न दृष्टः ।। स कुत्र गतः?

**व-मा :** कः? राजशेखरो वा! स उत्तरदेशपर्यटनार्थं मङ्गलनायिकया माधवीतुल्यनर्तक्या साकं गतः । तत्र तत्र नाट्यप्रदर्शनं कृत्वा

देशपर्यटनं च कृत्वाऽद्य प्रातरेव प्रतिनिवृत्तः ।। तस्य माधव्यां छात्रवात्सल्यमतीव वर्तते ।। सोऽपि माधवीगृहमागच्छति-

श्वे-स्वा : भवतु यद्यवकाशो लभ्यते - तर्हि - अहमपि सायं गोवलं द्रष्टुमागच्छामि - एष साधयामि ।।

व-मा : अहमप्यवशिष्टद्रव्यजातं क्रीत्वा गृहं गच्छामि ।।

।। इति विष्कम्भः ।।

(ततः प्रविशतो माधवीगोवलौ - उपविष्टौ - माधव्या अङ्के शिशुर्वर्तते-नार्यो बह्वयश्चोपविष्टा वर्तन्ते) (नेपथ्ये-"शतायुर्भव"- "चिरंजीव"-"सुखिनीभव"-सम्मानितानामर्थिनां प्रशंसाध्वनिः श्रूयते)

गो : प्रिये-अर्थिभ्यो देयजातं धान्यादिकं सर्वं दत्तं ।। मनश्च सन्तुष्टं वर्तते ।।

**यच्छन्ति वृक्षाः फलजातमेव नो**
**वर्षासु मेघा बहुवृष्टिदायकाः ।।**
**बुद्धि च पूषा प्रददाति पूजितः**
**सर्वं हि लोके खलु दानबोधकम् !** **1**

माधवी : (आत्मगतं) कथं दानस्तुतिः क्रियते ! अश्रुतपूर्वा खलु कामुके तत्त्वचिन्ता !......

गो : अथ किं । तव पुत्रिकां डोलायां निवेश्य - अधस्ताद्व्रीहि राशिं निक्षिप्य नामलेखनं कुरु ।।

मा : किं वा नाम धास्यावः ?

गो : अस्माकं कुलदेवता मणिमेखलादेवी ।। सा हि-अस्मत्पूर्वपुरुषान्- मध्येसमुद्रं-आपद्गतान् ररक्ष-अतस्तस्या नामैव धास्यावः ।

मा : तथैव कुर्मः-(तत्रत्या अपि नार्यस्तथैवेति-अङ्गीकृत्य शिरःकम्पं कुर्वन्ति । काश्चन मुदितमनसो हस्तताडमपि कुर्वन्ति ।। (माधवी शिशुं डोलायां निदधाति) महाभाग! "मणिमेखले"ति धान्यराशौ लिखामि ।।

गो : तत्र कः सन्देहः ? एवं कुरु ।

(सापि नाट्येन लिखति-सर्वा नार्यो "मणिमेखले"-इत्याह्वयन्ति)

एका नारी : (डोलासमीपमागत्य) अयि माधवि! तव पुत्री पितृ मुखी ।। अतोऽतीव सौभाग्यवती भूयात् ।

अपरा : (सापि शिशोर्मुखमवलोक्य) न - न - इयं मातृमुख्येव - माधव्यास्सौभाग्यातिशयो दृष्टचरः-नूनं तत्तुल्यैव स्यात्

अन्या : माधवीकुले जातानां नारीणां सौभाग्यातिशयस्य न्यूनता नैव संभवति (सर्वा लीलया डोलां प्रकम्पयन्ति)

मा : (गायंति - डोलान्दोलनं कुर्वंती)

**पुण्यैरशेषैः खलु जातदेहा रत्नैश्च कान्तैः परिमण्डिताङ्गी ।**
**जाम्बूनदाभा "मणिमेखले"यं नूनं भवेत्सा कुलकूटनारी ।। 2**

तास्वन्यतमा : (आत्मगतं) पण्यस्त्रियः पुण्यातिशयः कथं ? हुम् (प्रकाशं) एवमेव-इयमुर्वश्येव-तव कुलकूटनारी माधव्येव ।।

(अत्रान्तरे नेपथ्ये जनसम्मर्दजन्यकलकलः)

"पान्थाः! अप्रमत्ता भवत! महाराजस्य गजशालातः संजात-मदातिरेक उच्छृंखलः कश्चन गजराजो रथ्यासु स्वेच्छं चरति ।। अप्रमत्ता भवत"- ।।)

गो : (कर्णं दत्वा) अहो ! आश्चर्यं ! प्रिये माधवि ! तव दुहितरं द्रष्टुं गजराजोऽप्यागच्छतीति मन्ये ।

मा : (आत्मगतं) किमिदं दुश्शकुनमिव-(प्रकाशं-सरोषं) हास्यस्य-नायमवकाशः ।

गो : (शिशुमंके गृहीत्वा) मा भैषोः—

**नागो वा यदि वा सिंहो राजा वापि बलान्वितः**
**तव कन्यां परिस्प्रष्टुं न शक्तो मयि जीवति 3**

भीतिर्मास्तु । (पुनः-नेपथ्ये कलकलः) (नार्यंस्सर्वास्संजात-विह्वला उत्तिष्ठन्ति) सर्वाभिरत्रैव स्थातव्यं-न गन्तव्यं बहिः-अचिरेणैव पुरपालका अंकुशादिभिस्तं गजं शान्तं कृत्वा शृंखलया भन्त्स्यन्ति ।। मा भैष्ट ।।

(नेपथ्ये पुनश्च कलकलः)

**उत्पादयन्मनसि भीतिमशेषजन्तोः-**
**उच्छृंखलश्चरति पादपकर्षकोऽयम् ।**
**विघ्नेश्वरो व्रजति किं बहुजातरोषो**
**दिग्भारवाहचतुरः किमु दन्तिराजः ।। 4**

(घण्टारवः श्रूयते)

गो : समीपमागतो मत्तगज इव भाति ।। प्रिये माधवि ! प्रियशिशुं गृह्णीष्व - मा भैषीः - बहिर्गत्वा झटित्येव पुनरागमिष्यामि ।। (शिशुं दत्वा प्रस्थितः)

(नेपथ्ये जनसम्मर्दरवः-"परित्रायतां" "परित्रायतां"-वृद्धस्य कस्यचिदार्तरवः श्रूयते ।। "इक्षुदण्ड इव शुण्डादण्डेनोद्गृहीतो वृद्धः" । कस्यचन वर्णनध्वनिः । "न-न मार्जारगृहीतमूषिक

इव लंबतेऽयं वृद्धो गजस्यकरे"-अपरस्य वर्णनध्वनिः ।
"हा-हतोऽस्मि ।। अन्धं मां गजबन्धात् त्रातुं कोऽपि नास्ति
वाऽस्यां रथ्यायां? हा-हन्त नूनं हतोऽस्मि"-वृद्धस्यार्तिद्योतक-
क्रन्दनं श्रूयते ।। (हाहाध्वनिः "केनापि युवकेन कथं वृद्धो
झटिति परित्रातः"-उच्चैर्ध्वनिः)

(ततः प्रविशति गोवलः-बहुच्छिद्रवस्त्राच्छन्नशरीरेण वृद्धेन
साकम्)

गो : अयि भोः। वार्धके कुतः प्रस्थिता भवन्तः?

वृद्ध : वत्स! नूनं त्वं गजत्राता गोपाल एव ।। त्वयाहं
गजत्रातस्संवृत्तः । त्वं चिराय जीव ।। पुण्यतीर्थनिषेवणार्थं
प्रस्थितोऽहं - मार्गे गजरूपान्तरायः - सुखीभव - चिराय जीव-
प्रस्थितोऽस्मि ।।

गो : (स्वकं क्षौममुत्तरीयं वृद्धस्य क्षामे शरीरे स्थापयन्) भो महा-
भागाः! ममोत्तरीयं भवन्तः स्वीकृत्याऽऽत्मानमाच्छाद्य
गच्छन्तु । (आत्मगतं) दातुं किमन्यदस्ति? (हस्तेऽङ्गुलीयकं

दृष्ट्वा) भोः! इदमेवेदानीं मयि वर्तते । स्वीकुर्वन्तु ।।
(अङ्गुलीयकं ददाति)

वृद्ध : तव पुण्यातिशयः समुद्रप्रमाणमपि-अतिलङ्घयति ।। कस्त्वमसि?

गो : अहं गोवलोऽस्मि - महासाधुपुत्रः

वृद्ध : किं महानायकजामाता त्वं?

गो : एवं......एवं......

वृद्ध : धिक्त्वां (क्षौममङ्गुलीयकं च भूमौ क्षिपति) त्वं दारपरि-
त्यागी-तव सकाशात्प्रतिग्रहः पापाय कल्पते......(दलितविग्रहो
वृद्धः शनैर्निष्क्रान्तः)

गो : कथं निष्क्रान्तः-दत्तं द्रव्यं निराकृत्यैव गतः-!
"वयस्य कथं वर्तसे ? महागजः किमवदत्तुभ्यं ?" इति पृच्छन् प्रविशति श्वेतस्वामी)

श्वे-स्वा : महदिदं साहसं त्वया कृतं ...... अहं तत्रैवासं ...... तव धीरकृत्यं दृष्टवानस्मि ।।

गो : तत्र धीरकृत्यं किमस्ति-आर्ताः सर्वे सर्वैः सर्वत्र सर्वदा सर्वप्रकारेण रक्षणीयाः-तदेव मया कृतम् ।......

श्वे-स्वा : वयस्य ! किमुत्तरीयकं भूमौ वर्तते-शरीराद्गलितं वा ?

गो : एवं-एवं (गृहीत्वा) (उत्तरीयेणात्मानमाच्छाद्य) भद्र! कथं वर्तसे ? चिरकालानन्तरं त्वां द्रक्ष्यामि ।।

श्वे-स्वा : तव पुत्रिका कथं वर्तते ?

गो : आगम्यतां...अद्य डोलारोपणमहोत्सवोऽभूत् ।।
("भो जनाः। गजः शृंखलया बद्धः ।। भीतिर्मास्तु"-नेपथ्ये श्रूयते)

श्वे-स्वा : कथं वर्तते तव भार्या - (अर्धोक्तौ जिह्वादंशनं कृत्वा) तव प्रिया......

गो : सा रत्नाकरोद्धृतरत्नतुल्या-अनाघ्रातकुसुमतुल्या ।।

श्वे-स्वा : एवं स्यात् । यदि सा कुलांगनाकुलेजाता......

गो : मैवं ब्रूयाः-यत्र कुत्रापि जाता अपि स्त्रियः-अभिजाता वर्तन्ते ।

श्वे-स्वा : पण्यस्त्री कथं तथा स्यात् ...... अस्या माधव्या अपि 'राजशेखर' इति विख्यातः कश्चन वीणाशिक्षक आसीत्

गो : ततः किम् ?

श्वे-स्वा : अस्यां तस्य छात्रवात्सल्यमतीवाऽऽसीत् ।

गो : तावता किं ? (सरोषं वदति) अनन्तरं द्रक्ष्यामि । (इति प्रस्थितः)

श्वे-स्वा : वयस्य ! किमिदमङ्गुलीयकं भूमौ वर्तते ?

गो : ओ-हो......हस्ताद्गलितमभूत् (स्वीकृत्य) धन्योऽस्मि-

श्वे-स्वा : प्रस्थीयतां-अन्यदा वल्ल्या साकं तत्राऽऽगच्छामि-(प्रस्थितः)

गो : (आत्मगतं) किमिदं ? पात्रभीरुर्जरठः प्राणत्राता मया प्रेम्णा दत्तमपि निराकृतवान् ! मामागस्कृतं मन्यते सः !! यद्यपि नाहमनेनाः-तथापि-एनस्वी न भवामि-कृतघ्नोऽयं वृद्धः- —(कतिचन पदानि गच्छति) हुं-आगतमपि वेश्म नः मया बुद्ध्यते-(कर्णं दत्वा) कोऽपि माधव्या भाषमाणो वर्तते (अपवारितस्तिष्ठति) अत्रैव स्थित्वा श्रोष्यामि-(अन्तः- अन्येन केनचित्-भाषमाणा वर्तते माधवी)

मा : महाभाग ! भवतामागमनेनातीव सन्तुष्टास्मि ! चिर कालानन्तरं भवदागमनमेव मम प्रीतिदायकं ....... किमर्थं स्वर्णमालादिकम्......

आगतःपुरुषः प्रिये-क्षन्तव्यं-वत्से-तव स्मरणमेव सदा मम-उत्तरदे शाटन-कालेऽपि-(डोलायां शिशुं दृष्ट्वा) (आत्मगतं) हन्त ! माधवी प्रतिरूपेयं कन्याः......

माधवी : ममापि तथैव-(अश्रूणि मुंचति)

गो : कोऽयं ? श्वेतस्वामिनोक्तं तथ्यमेव किमु ? असन्निहिते मयि शिशुदर्शनमिषेण स्वर्णमालादिकं दत्वा-एकान्ते भाषमाणो वर्तते-

न-न क्रीडमानो वर्तते-डोलोत्सवार्थमागता नार्यश्च निष्कासिताः... ऊम् - किं वंचितोऽस्मि तया? "प्रिये" इत्याह्वयति - "तव स्मरणमेवे"ति च वदति...उभयोरपि परस्परस्मरणमप्यासीत्... (प्रविश्य) प्रिये! कोऽयं महाभागः?

मा : एते ममाचार्याः - वीणावादनेऽतीव कुशलाः-राजशेखरवर्मेति प्रसिद्धाः! (सानन्दं वदति)

रा-शे : नमस्ते महाभाग - मयि प्रविशति भवन्तः प्रस्थिताः - (माधवीं हस्तेन निरूप्य) अभिनिवेशादेव - एवं वदत्येषा - प्रेमाधिक्याद्वा-वस्तुतस्तु मया स्वल्पमेव बोधितम्—

गो : (आत्मगतं) यदाशङ्कितं तत् तथ्यमेवाभूत्। सोऽयं श्वेतस्वामिना निर्दिष्टो राजशेखर एव (प्रकाशं) किमर्थं बहुपारितोषिकमानीतं भवता?

रा-शे : वात्सल्यादानीतं-तत्र को दोषः? (सरोषं वदति)

गो : (आत्मगतं) वात्सल्यं न भवति-नामान्तरमेव तस्य - (प्रकाशं) दोषो मय्येव भवति, न तु भवत्सु-

मा : (आत्मगतं) हा धिक्! किमिदमेवं भाषत आर्यपुत्रः? (प्रकाशं) कोपो मास्तु - क्वापि दोषो नास्ति ॥

रा-शे : (आत्मगतं) श्रान्तोऽयं जनः-अत एवं भाषते-इदानीमितः प्रस्थानमेव वरं-(प्रकाशं) वत्से! मया प्रस्थीयते-अन्यदा पुनरा-गमिष्यामि - (गन्तुमुद्युक्तः)

गो : मास्तु-भवानेवात्र तिष्ठतु-मया प्रस्थीयते—

(ततः प्रस्थितो गोवलः)

मा : (पादयोः पतति) आर्यपुत्र किमिदं? अकारणान्मां परित्यजसि?

गो : ह - ह - ह - आर्यपुत्रः - कस्ते - आर्यपुत्रशब्दवाच्यः ? कुलटे ! कुटिलस्वभावे ! मां मुंच (सकोपं वदति)

मा : अहो! शान्तं पापं-वाग्वज्रो मयि पातितः खलु

गो : (उच्चैः) हाः ! त्वया वंचितोऽस्मि- अद्य प्रातर्वीणायामन्याऽऽसक्तचित्त इवाऽहं गानमकुर्वम् ॥ त्वमप्यन्याऽऽसक्तेव गानं कृतवती ॥ तदारभ्य मम सन्देहः-न हि दृष्टेऽनुपपन्नं नाम- (विचिन्त्य) स्वभावो दुरतिक्रमः - तथाहि—

**बहुधा क्षालितो मत्स्यो दुर्गन्धं नैव मुंचति—**
**गंगाजले वसन् भेको निष्पापो जायते किमु? 5**

मा : तथा न-कारणसमवेतदोषाः कार्ये नियमेन सम्भवन्तीति न्यायः प्रायोवादः ॥ क्वचिद्व्यत्ययोऽपि दृश्यते—

**दुर्गन्धादपि पंकाद्धि जायते पंकजं शुभम्**
**असुराणां कुले जातः प्रह्लादः किन्न सात्त्विकः? 6**

गो : त्वं पंकजं न भवसि - न वा प्रह्लादः । अलं तत्त्वविचारेण ॥ कुलदोषो दुरतिक्रमः खलु-

मा : महाभाग ! कुलदोषो मयि न शंकनीयः - (उच्चैर्वदति) हा - हतास्मि - (मूर्छिता पतति)

(चिन्ताक्रान्तो गोवल एकाकी गच्छति)

(नेपथ्ये)

वित्तस्य हर्ता भुवि तस्करो जनः
प्राणस्य हर्ता किल भास्वतस्सुतः ।
वैद्यस्तु हर्ता खलु वित्तजीविते
मानं च ताभ्यां सह पुत्रिकापतिः ! 7

गो : (गच्छन् कर्णं दत्वा) किं तत्त्वबोधकवाक्यानि श्रूयन्ते - तस्करादपि यमः कुशलः-यमादपि वैद्यो निपुणतरः - वैद्यादपि जामाता कुशलतरः-सम्यगुक्तं (विचिन्त्य-विहस्य) अन्या काचन वर्तते-एतेभ्यस्सर्वेभ्योऽपि कुशलतरा—वारवनिता-सा सर्वस्वमपि हरति - अहो - मोहस्य माहात्म्यं ! सर्वस्वमप्यपहृतं तया - धनमानहीनः-नष्टपुण्योऽहं-यतो मत्सकाशाद्दीनजनोऽपि प्रतिग्रहं न करोति! कामधेनुःपरित्यक्ता । उष्ट्रस्य सेवा कृता ।। अहो मौग्ध्यं! गृहमागतं मां दृष्ट्वा वृद्धाः प्रियजाया च नूनं धिक्करिष्यन्ति । वचनीयपात्रतां प्राप्तोऽस्मि ।। (अश्रूणि मुंचति - रथ्याया-मुपविशति)

(सर्वे निष्क्रान्ताः)
।। पंचमोऽङ्कः ।।

## ।। षष्ठोऽङ्कः ।।

(गोवलगृहप्रांगणात्प्रस्थितो मधुग्रावो रथ्यायां भाषमाणो वर्तते)

**म-ग्री:** स्वामिन्याऽऽज्ञप्तोऽस्मि-"मधुग्रीव! स्वर्णकारसकाशे समीकरणार्थं मंजीरयुगलं दत्तं-तत्सकाशादानय"-इति-स्वर्णकारगृहं प्रति शत-कृत्वो गतवानस्मि । नैव ददाति-हुं-पुनरपि-अद्य गम्यते ।

(अत्रान्तरे शंभुशर्मा-गोवलगृहं प्रत्यागच्छति)

**शं-श :** मधुग्रीव ! किं निमग्नहृदयो वर्तसे ? कुत्र गम्यते ?

**म-ग्री :** आर्य ! नमस्ते - स्वर्णकारगृहात् - मञ्जीरयुगलमानेतुं प्रस्थितोऽस्मि-

**शं-श :** (विहस्य) मासषट्कमतीतं-अद्यावधि नैव दत्तं वा? (विचिन्त्य) तत्रैव मञ्जीरयुगलं तिष्ठतु - यद्यानीयते त्वया - तदपि स्वामी माधवीवशं नयेत्- ।। इदमेवाभरणं बहुमूल्ययोग्यमवशिष्टं वर्तते - पश्यतोहरसकाशे स्थितिरेवास्तु ।। स यदा कदापि दास्यतीति प्रतीतिः ।

**म-ग्री :** तथ्यमेव । नाडिन्धमो यदा कदापि पुनर्दास्यति-वारवनिता नैव नैव-(विचिन्त्य) स यदि दास्यति-आनयामि-स्वामिन्यै दत्वा-"स्वामिने नैव दातव्यं"-इति निवेदयामि-तथा सति मंजीरयुगलं सुरक्षितं भवेत् ।।

**शं-श :** (उच्चैर्विहस्य) तवाऽऽज्ञापरिपालने महती श्रद्धा स्वामिन्याः ! तदस्तु ।। पूर्वेद्यू रात्रौ-माधवीगृहात्-गोवलः प्रस्थित इति किं -वदन्ती मया श्रुता-तव-कर्णविवरमागता वा सा वार्ता ?

**म-ग्री :** किं-किं-...मया पूर्वरात्र एव सुप्तं-न कापि वार्ता श्रुता-—तादृशस्वप्नोऽपि नैव दृष्टो मया...

**शं-श :** किं? सुप्तं त्वया - त्वं गृहरक्षकः...त्वया रक्षणीयं गृहं नक्तमपि-तादृशस्त्वं पूर्वरात्र एव सुप्तवान्-कथम्?

**म-ग्री :** आर्य! क्षन्तव्योऽयं जनः (सगद्गदं वदति।। वेपमानस्तिष्ठति)

**शं-श :** क्षन्तव्यता किमर्थं? तथ्यभाषणार्थं वा-स्वापार्थं वा-?

**म-ग्री :** (त्वरया) सर्वार्थं (विरम्य) न-न-स्वापार्थमेव - (पादयोः पतति) (उत्थाय) गोवलस्वामी नूनमागमिष्यतीति मन्ये-

**शं-श :** (विरम्य) कथं त्वया ज्ञातं? त्वं ज्योतिश्शास्त्रवेत्ता न भवसि-

**म ग्री- :** पूर्वेद्युस्सायं मम दक्षिणहस्ते स्पन्दनमासीत्-अत एवं वदामि-

**शं-श :** एवं वा-पूर्वेद्युर्दक्षिणबाहुस्पन्दनमभूत् तव - अतः स्वाम्यागमिष्यतीति तव निर्णयः। अद्य तवैव वामाक्षिस्पन्दनं- अतः पुनः स्वामी प्रत्येष्यति-एवं वा?

**म-ग्री :** (साश्चर्यं) तथ्यमुक्तं भवता-कथं भवता ज्ञातं? अद्य प्रातः वामाक्षिस्पन्दनमप्यासीत्। को वानर्थः स्यादिति शंकापि वर्तते-...

**शं-श :** (विहस्य) तव वामाक्षिस्पन्दनस्य फलं मम दर्शनमेव- (विरम्य) गच्छ-गच्छ-मञ्जीरयुगलमानय-अहमपि स्वामीनीं दृष्ट्वा गच्छामि।

(इति विष्कम्भः)

(शम्भुशर्मा गोवलगृहं प्रविशति)

शं-श : (आत्मगतं) अहो नष्टश्रीकता गृहस्य-! (पादतलरवं श्रुत्वा कण्णकी बहिरागच्छति)

क : आर्य! आगन्तव्यम्! को वा विशेषः ?

शं-श : वत्से! अतीव कृशा वर्तसे! तव मनोव्यथां जानाम्येव-परंतु किं कुर्मः ?

क : आर्य - मम जन्मान्तरार्जितमागः सर्वस्यापि दुःखस्य निदानं भवति ।।

शं-श : चिरमालोचितं-(विरम्य) एवं रोचते मह्यम्—

क : किमिव ?

शं-श - धर्माध्यक्षस्य धर्मपालकस्य शास्तू राज्ञः परिषदि गोवलदुश्चेष्टादिकं निवेद्य त्वया पत्रं दातव्यमिति मे मतिः...

क - (कर्णौ पिधाय) शान्तं पापं! कथं तथा कर्तुं शक्यते? वेश्यायामासक्तिः परदाररतत्वदोषाय न कल्पते-यतः वेश्याः परेषां दारा न भवन्ति-कृत्स्नधनव्ययोऽपि न दोषः-यतः कृत्स्नस्यापि धनस्य स एव स्वामी ।। दारत्यागरूपोऽपि दोषस्तेषु न सं भवति-नाहं सर्वथा परित्यक्ता तैः । (साक्रोशं वदति- अश्रूणि मुंचति) अतः किंरूपं पत्रं दातुं शक्यते राजपरिषदि? भवन्तो ब्रुवन्तु...

शं-श : (आत्मगतं) अहो नैपुण्यमस्याः! अहो पतिभक्तिः!! (प्रकाशं) दारपरित्यागाभावेऽपि संरक्षणं न कृतं (उच्चैस्साक्रोशं वदति) "संरक्षणार्थमागतोऽस्मि" - (नेपथ्ये श्रूयते) (ततः प्रविशति

गोवलः - सञ्जातविस्मयः शंभुशर्मा पश्यति) (आत्मगतं) किं-वदन्ती तथ्यमेव जाता—

गो : आर्य ! संरक्षणार्थमागतोऽस्मि ।। प्रिये ! (सगद्गदं) नष्टमोहः प्रत्यागतोऽस्मि ।। (गाढमालिंग्य) प्रिये क्षन्तव्योऽयं...... (इत्यर्धोक्तौ विरमति-अश्रूणि मुंचति)

क : (सगद्गदं) को वा क्षन्तव्यः ? (अश्रूणि मुंचति) आर्यपुत्र ! धनापेक्षा वर्तते वा ?

गो : व्रणभूयिष्ठे मनसि सूचीनिवेशनं मा कृथाः । (नेपथ्ये-"अंब मंजीरद्वयमानीतं-अन्तरागन्तुं शक्यते वा")

गो : मधुग्रीव ! आगच्छ (उच्चैर्वदति)

(ततः प्रविशति मंजीरहस्तो मधुग्रीवः)

म-ग्री : (स्वामिनं दृष्ट्वा पादयोः पतति) स्वामिन् ! अतीव सन्तुष्टोऽस्मि ।। (आत्मगतं) स्वामी नूनमागमिष्यतीति शुभद्योतकनिमित्तेनैव ज्ञातम् ! (प्रकाशं) भवन्तोऽतीव-कृशत्वमापन्नाः ! अंब ! मंजीरयुगलं स्वीक्रियतां-।। अनन्तरमाग-मिष्यामि ।। आगतस्स्वामी - उत्सवः कार्योऽद्य - कार्यजातं बहु वर्तते (दत्वा निष्क्रान्तः)

शं-श : मयाप्यनन्तरमागम्यते ! (इति निष्क्रान्तः)

क : आर्यपुत्र ! इदं मंजीरयुगलमात्रमवशिष्टं वर्तते-स्वीक्रियताम् !

गो : जानेऽहं - नाडिन्धमसकाशे स्थितं शिंजिनीयुगलं - अहो मोहमाहात्म्यं-!

**विश्वजिन्नामके यागे दत्वा हि सकलं धनम् ।**
**इष्ट्वा चापि यथाशास्त्रं नाकं याति नरोत्तमः ।। 1**

अहो पापात्माहम् !!

**सर्वस्वं हि मया दत्तं वेश्यायै मोहहेतुना ।**
**कामाग्नौ च हुतं सर्वं नरकान्नास्ति मे च्युतिः ।। 2**

क्षीणचन्द्रस्य चरमकलेव-इदमेवावशिष्टं [मंजीरयुगलं हस्तेन निर्दिश्य-अश्रूणि मुंचति

क : -क्षीणश्चन्द्रः पुनरुपचयं प्राप्नोत्येव ।। चिन्ता मास्तु ।।

गो : प्रिये! एवमेवं...इदमेव मंजीरयुग्मं मूलधनं कृत्वा वाणिज्यं कर्तव्यमिति मे मनीषा ।।

क : तत्सर्वंमनन्तरं विचारयामः-प्रथमतो मया क्षीरमानीयते-तत् पीत्वा किंचिद्विरम्य मंगलस्नानं च कृत्वा देवताराधनपूर्वकं भोजनं कुर्वः ।। तदर्थं सम्भारसंभरणं करोमि । [इति निष्क्रान्ता] ["आर्यं, पादपातैर्नतास्मि"-नेपथ्ये श्रूयते]

गो : [विमृश्य-] का - आगता? हो वसन्तमाला ।। [ततः प्रविशति पत्रहस्ता वसन्तमाला]

व-मा : आर्य! नमस्ते! माधव्या प्रेषितमिदं पत्रं...[प्रयच्छति]
गो : [स्वीकृत्य पठति] "आर्यपुत्र!

**वारांगनापरित्यागं दाराणां चापि सेवनम्**
**स्मारं स्मारं न दूयेऽहं खिन्ना तु तव शंकया 3**

**रज्जौ सर्पत्वबुद्धिस्तु जायते दृष्टिदोषतः**
**कौटिल्यं सहजं तस्यास्तावता नास्ति दुष्टता ।। 4**

मणिमेखलासन्दर्शनार्थमेव वा नूनमागन्तव्यमिति प्रार्थये"-
माधवी—अहो! नैपुण्यं तस्याः-! [पत्रे नाट्येन प्रत्युत्तरं लिखित्वा पठति] "तथ्यमुक्तं-परंतु विपरीतन्यासो न्यायस्य ।। तथा हि-

**सर्पे रज्जुत्वबुद्धिर्हि मोहान्धस्य ममाऽभवत् ।।**
**सर्पं बुद्ध्वा प्रबुद्धोऽस्मि-याथार्थ्यं तत्र कारणम् 5**

-गोवलः ।। [सकोपं] वसन्तमाले-पत्रं माधव्यै देहि ।। इतोऽपसर सत्वरम्-

व-मा : आर्य - कदा वा भवतामागमनं स्यात् ?

गो : [ उच्चैस्सकोपं ] न कदापि - इतो गच्छ - गच्छ - नो चेत् [इत्यासनादुत्थितः] [वसन्तमाला पत्रं गृहीत्वा प्रतिनिवृत्ता] [एतस्मिन्नन्तरे क्षीरमानयति कण्णकी]

क : आर्यपुत्र-क्षीरमानीतं-पीत्वा स्नानमाचर [पात्रं प्रयच्छति]

गो : [सगद्गदं]-धनहीनस्य बन्धुजनमध्ये वसतिर्न युक्ता-मानहानिरपि-[अश्रूणि मुंचति] अतो मंजीरयुगलं मूलधनं कृत्वा पत्तनान्तरे वाणिज्यं कर्तव्यमिति मे मतिः-[आलोच्य] मीनाक्षीसमेतस्य सुन्दरेश्वरस्य पत्तनमेव गच्छावः ।। [विरम्य] श्वः प्रभातसमये प्रस्थानं भवेत् ! न वक्तव्यं कस्मैचिदपि ।।

क : यदार्यपुत्राय रोचते तत् कुर्वः ।। धैर्यत्यागो मास्तु ।।

[निष्क्रान्तौ]

।। षष्ठोऽङ्कः ।।

## ।। सप्तमोऽङ्कः ।।

(नेपथ्ये)

त्रातासि सर्वजगतां रजताद्रिवासिन्
सुप्तोऽपि सर्वजगतां ननु कर्मसाक्षी
हालास्यनाथ कलरावयुता द्विजाताः
सोमार्धशेखरविभो तव सुप्रभातम् ।। 1

(नेपथ्ये — "प्रिये! मथुरापुरी समागता - एहि - त्वरया पुरीं प्रादक्षिण्येन प्रविशावः"......)

(ततः प्रविशतः कण्णकी गोवलश्च)

गो : प्रिये - मथुरापुरस्य सश्रीकतां पश्य-क्षीणपुण्या अलकापुरवासिन एवात्र लब्धजन्मान इति मन्ये-

क : (आत्मगतं) कुतोऽश्लीलशब्दः 'क्षीणपुण्यः' - प्रयुज्यते ? (दक्षिणाक्षिस्पन्दनं सूचयित्वा) अहो दुर्गतिः - अत्राप्यनुवर्तते किमु ? अहो मन्दभाग्यता! प्रभो सुन्दरेश! मातः! जलचरलोचने! युष्मान् शरणं गच्छावः। (प्रकाशं) आर्यपुत्र! यत्र कुत्रापि साधूनां गृहे द्वित्रिदिनपर्यन्तं वसतिं कुर्वः ।। गृहात्प्रस्थितयोरावयोर्मार्गे मासादुपर्येवातीतम् ।।

गो : एवं-एवं-मम मित्रवर्यः कश्चनात्र देवमन्दिरस्य नातिदूरे वसति- तस्य गृहं गच्छावः-

क : यदार्यपुत्राय रोचते (विरम्य) परंतु तत्र गत्वा किमर्थमागतमिति वक्तव्यं ?

गो : वाणिज्यार्थं देवदर्शनार्थं चागतमिति वच्मि ।। त्वमपि तथैव ब्रूहि - अचिरादेव वेतनार्थं पार्थक्येन गृहं लब्ध्वा तत्र गच्छावः- एतस्मिन्नन्तरे मञ्जीरविक्रयार्थं यत्नं करोमि-

क: अथकिम् ।। (निष्क्रान्तौ)

(नेपथ्ये कलकलः - "इदमतिमूल्यं नूपुरमेव" - कश्चन ब्रवीति ।। "नूनं-एतादृशो मंजीरोऽस्मिन्नापणे नैव लभ्यते"-अपरो वदति ।। "अयं विक्रयी देशान्तरादागतोऽर्थार्थी-इति मन्ये"-अन्यो वदति !।) (ततः प्रविशति मञ्जीरहस्तो गोवलः)

गो: प्रातः प्रभृति स्वर्णकारवीथ्यां-आपणवीथ्यां च दशवारं पर्यटनं कृतं-'अमूल्यमतिमूल्यं'-इत्येव वदति-न कोऽपि क्रयार्थमागच्छति ।। ललाटन्तपश्चण्डातपः ।। किं कुर्याम् ? ("महाभाग नैव विक्रीतं वा" ? इति पृच्छन् कश्चन नाडिन्धमः - आयससन्दंशधरः प्रविशति )

नाडिन्धम: महाभाग! प्रातरेव दृष्टो भवान्! एतावत्पर्यन्तं नैव विक्रीतं किमु ? यः कोऽपि दोषो भवेदाभरणे......

गो: (आत्मगतं) दोषो मय्येव-नत्वाभरणे ।। अयं राजचिह्नाङ्कित —कंचुकः । अतो राजगृहसम्बद्धो हेमकारः स्यात् ।। भवतु ।। (प्रकाशं) भवानेव पश्यतु ।। बहुमूल्ययोग्येयं शिंजिनी-तस्या मूल्यमपि भवतैवोच्यताम् ।। (नूपुरं तस्मै प्रयच्छति-किंतु हस्ताद्गलितं सत् भूमौ पतति)

नाडि: (कृताञ्जलिः सस्मितं) भद्रमुख! राजस्त्रीचरणभूषणानां मूल्यं निर्णेतुमसमर्थोऽयं जनः।। तथापि महीपालमकुटाद्यलं काराणां निर्माणेऽतिचतुर एवाहं (सगर्वं वदति) (भूमौ पतितं नूपुरमादाय - मञ्जीरस्यास्यग्रन्थिं च विस्रस्य सम्यक् परीक्ष्य) (आत्मगतं) शुद्धजातरूपनिर्मितं-विविधवैचित्र्यभरितं-(कर्णसमीपं नीत्वा-संचाल्य) शिञ्जानार्थशकलान्यपि माणिक्यमयानि - ॐ (प्रकाशं) भवानत्रैव तिष्ठतु ।। इदमाभरणं राज्ञे प्रदर्श्य प्रत्यागच्छामि-अन्यतरन्नूपुरमेव मया स्वीक्रियते-(इति नूपुरमूर्ध्वमुद्धृत्य दर्शयति)-अचिरेणैव प्रत्यागन्तायं जनः ।।

गो : अन्यतरदेव मयाप्यानीतं - अथकिम् ।। (विरम्य) मयापि भवता साकमागम्यते ।।

नाडि : राजकीयपुरुषाणामेव राजद्वारे झटिति प्रवेशः-राजदर्शनं च भवेत् ।। न तु सर्वेषां ।। भवदादीना मागमने विलम्बो भवेत् ।। मम न कापि हानिः......

गो : एवं वा-तर्हि गम्यतां-अहमत्रैव वर्ते । (आत्मगतं) (अञ्जलिं बध्द्वा) मातः! मीनाक्षि ! तव प्रसादात्-अद्यैव धनलाभो भूयात् ।। (प्रकाशं) त्वरया प्रत्यागम्यताम्

नाडि : तत्र कः सन्देहः (इति निष्क्रान्तः)

(इतस्ततस्संचरन् गोवलस्तिष्ठति)

(नेपथ्ये)

**सीताजानी रघुवरकुले प्राप्तजन्मा च वीरः**
**हस्तन्यस्तं युवनृपपदं पुण्यनामा न लेभे ।**
**लेभे दुर्गं बहुमृगयुतं काननं रामभद्रः**
**को वा देवो दिवि भुवि नरो भाविनीं वेत्ति वृत्तिम् ।। 2**

(कर्णं दत्वा-श्लोकं श्रुत्वा) हुं-श्रुतपूर्वध्वनिरिव भाति । कस्यवायं ध्वनिः ? (किंचिदिव संचिन्त्य) हन्त नूनं कण्ठीरवकण्ठस्य माठरयज्वन एवायं कण्ठरवः ! कथं सोऽप्यत्रागतवान् स्यात् ? ( चिन्ताक्रान्तस्तिष्ठति ) (ततः प्रविशति माठरयज्वा शिष्यैस्साकम् )

मा-य : (गोवलं दृष्ट्वा-आत्मगतं) कथं गोवलो दृष्टिगोचरे पतितः? कथं वा संभाषणीयं ? (प्रकाशं) गोवल ! चिराय दृष्टोऽसि !

गो : (आत्मगतं) कथमाशीराशंसनं नैव कृतमार्येण! कुपितः किमु? मयि पातित्यं शंकते किमु? (प्रकाशं) यज्वन्! प्रणमामि - (पादयोः पतति)

मा-य : (आत्मगतं) नैवाशंसनीयं......पतितकल्पोऽयं......न - न - न वन्दमानास्सर्वेऽपि-पापकर्माणोऽपि-आशास्या एव-कथं वाशंसनीयं? (प्रकाशं) विपुलयशा भव-उत्तिष्ठोत्तिष्ठ ।।

गो : (आ-तं) कथं चिरजीवित्वं विहाय विपुलकीर्तित्वमेवाशंसति पुण्यपुरुषः? (प्रकाशं) अपि कुशलं? कुत्र प्रस्थिता भवन्तः?

मा-य : गोवल! तीर्थयात्रार्थं प्रस्थितोऽस्मि छात्रैस्साकं ।। प्रसङ्गात्त-वान्वेषणमपि करोमि - दिष्ट्या दृष्टोऽसि - गोवल ...... (अर्धोक्तौ विरमति)

गो : किमपि वक्तुकामा इव.. ...

मा-य : गोवल...(सगद्गदं) त्वद्विरहं, त्वयारोपितदोषं चासहमाना माधवी केशपाशेन साकं सर्वाण्याभरणान्यपास्य श्रमणा जाता

गो : (उच्चैः) अहो दैवगतिः-वस्तुतस्तु तस्यां कौटिल्यं नास्तीति तस्याः क्रिययाऽवगम्यतेऽधुना-परित्यागो न दोषाय-दोषारोपणं तु न युक्तरूपमिति मन्ये - तत्तु पापायैव कल्पते - धिङ्मां त्वरा —सम्मूढचित्तम् (अश्रूणि मुंचति)

मा-य : साधूक्तं त्वया - त्वरादासत्वं सर्वत्र वर्जनीयमेव ...... वारवनिताकुले जातापि सा शुद्धैवेति जना मन्वते

गो : (आत्मगतं) श्वेतस्वामिवचनेन-तस्या वीणावादनेन च वंचि-तोऽस्मि ।। धिङ्मां! सौहृदय्यात् मां प्रतिनिवर्तयितुं मित्रमणिना

श्वेतस्वामिना-अलीकवचनमुत्पादितं किमु? माधवीवीणावादन-मपि परिहासविजल्पितं किं न स्यात्-सम्भाव्यते-अहो मौग्ध्यं ! उभयमपि परमार्थेन गृहीतम् ।। हन्त ! राजशेखरस्य छात्र-वात्सल्यमपि मयाशङ्कितं !! सर्वमेतत्काकतालीयं संवृत्तम् ! (विरम्य) (प्रकाशं) अन्ये बान्धवाः कथं वर्तन्ते ?

मा-य : त्वदीया बान्धवास्त्वामेवान्विष्यन्तः दिक्षु विचरन्ति—

**सीतार्थं पूर्वकल्पे तु प्रेरिता दिक्षु वानराः**
**सुग्रीवेण यथा तद्वत् त्वज्जनैः प्रेषिता नराः-** 3

गो : अहो कष्टं बन्धुजनानां-किं कुर्मः-पुण्यदरिद्रोऽहमिति मे मतिः (अश्रूणि मुंचति)

म-या : (सगद्गदं) सत्कार्यव्ययशील ! अकिंचनबन्धो ! गोवल! समाश्वसिहि - समाश्वसिहि -! इह जन्मनि त्वं द्विजपूजनं - साधुजनसंसेवनं - आर्तपरित्राणं - एवमादीनि साधुकर्माण्यपि कृतवानसि-तथापि तन्वंग्या ललनाललामभूतया साकं प्रस्थानं प्राक्तनपापकर्मोत्थमेवेति विद्धि । पुराकल्पेऽपि नलमहाराज-विषयेऽप्येवमेवासीत् ।

गो : वेदविद्वरेण्य ! तातदर्शनतुल्यं भवतां दर्शनं-(विरम्य) मन्द-भाग्योऽयं जन.-प्रस्थानात् पूर्वं गृहे कश्चन दुःस्वप्नो मया दृष्टः-दिग्वासा अयं जनो वाहद्विषन्तमारूढस्सन् सुदूरं चचार - त्रियामान्ते चायं स्वप्नो दृष्ट.-त्रियामान्तस्वप्नाः सद्यः फलदा इति वृद्धा वदन्ति । (पुनरश्रूणि मुंचति)

मा-य : सनाश्वसिहि - मीनाक्षीं समाराध्य शुभं प्राप्नुहि - शुभो दर्को भवेत् - दुःस्वप्नजन्यक्लेशो मास्तु ।। कदा वा प्रत्यागमनं तव भवेत् ?

गो : नैव प्रत्यागन्तायं जनः ।

मा-य : (आत्मगतं) प्रत्यागमनाभावस्य कोऽर्थः स्यात् (प्रकाशं) अत्रैव निवासो मा भूत् । 'त्वमत्रैव कुशली वर्तसे'-इति सर्वेभ्यः स्वपत्तने निवेदयामि-

गो : मास्तु-तथा सति सर्वेऽपि मां द्रष्टुकामा भवेयुः...अतो गोवलो न दृष्टः-अदृष्टिगोचरं स्थानं प्राप्तवान् स्यादित्येव वक्तव्यम् ।।

मा-य : (कर्णौ पिधाय) अमंगलं - अमंगलं - तथा नैव ब्रूहि -

गो : (आत्मगतं) अमंगलद्योतकं वाक्यं नैवोक्तं मया-कथं तादृशोऽर्थः स्वीकृतः......भवतु (प्रकाशं) भवन्तो यात्राशेषं समाप्य गच्छन्तु-अहमपि शरीरयात्राशेषं निर्वाहयामि - नमो वोऽस्तु - (इति निष्क्रान्तः)

मा-य : अहो दैवगतिः-गोवलो महाकुलप्रसूतः-आढ्यः-।। अहो कष्टं ! दारपरित्यागः-धननाशः-मानहानिः-स्वदेशपरित्यागः... अहो दुःखपरम्परा ! विवाहकाले शुभेतरद्योतका ये संभूतास्ते निष्फला न भवन्ति किमु ? (अञ्जलिं बद्ध्वा)

**हालाहलोऽपि पीयूषं भुजङ्गा अपि भूषणम्-**
**दिशश्च वसनं यस्य स नः पायात्सदाशिवः-।।** 4

शम्भो सर्वान् रक्ष रक्ष-जगत्पते-अपराद्धानपि पाहि-ऊं-ऊं वत्साः! तूर्णं गच्छत-गच्छत-हालास्यनाथं दृष्ट्वा त्वरया गन्तव्यम् ।।

शैवक्षेत्राणि बहूनि संसेवितानि-वैष्णवपुण्यस्थलानि द्रष्टव्यानि वर्तन्ते-मदीयं 'चेतः। शयानं महापुरुषं श्रीरङ्गनाथं-तिष्ठन्तं पुराण पुरुषं श्रीसप्तगिरिनाथं च मह्यं दर्शय'-इति मां प्रेरयति-ऊं-ऊं-तूर्णं गच्छत...(इति निष्क्रान्तः शिष्यैस्साकं)

(नेपथ्ये)

यन्ता भूमेररिकरिहरिः पापभीरुश्च नित्यम्
पाण्ड्यो देवस्सुमशरहतस्सेव्यमानोऽनुवर्गैः ।।
नैजात्स्थानाद्बहुमणियुतान्मण्डितान्मंत्रिमुख्यैः-
भद्रां देवीं प्रणयकुपितां द्रष्टुमभ्युत्थितोऽयम् 5

(वार्तानिवेदको गायति)

।। सप्तमोऽङ्कः ।।

## ।। अष्टमोऽङ्कः ।।

(ततः प्रविशति नाडिन्धमो नूपुरहस्तः)

नाडि : (आत्मगतं) दिष्ट्या रक्षितोऽस्मि - गतमासे देव्या मञ्जीरो मयापहृतः-परंत्वद्यावधि को वाऽऽगस्कृदिति नृपोऽपि न जानाति (विहस्य) मत्कृतागो यावत्प्राकट्यं न प्राप्नोति तावदहं महीपाल-सकाशे - 'देशान्तराभिजनोऽयमेव मञ्जीरापहर्ता' - इति निवेद्य निर्दोषो भवामि - ( कपिवदुत्थाय-आनन्दभरितचेष्टाश्च कृत्वा ) (प्रकाशं) युक्तरूपोऽयं कालः-देवी च प्रणयकुपिता-देवश्च तां द्रष्टुं न्यायसभातः प्रस्थितः - मध्येमार्गं दृष्ट्वा निवेद्य सम्पूर्णकामो भवामि-(हस्तगतं मञ्जीरं निरूपयन्) इदं चेदानीं तस्मै न प्रदर्शनीयम् ।। (कञ्चुकस्यान्तः क्षिपत्याभरणं) (पुनरपि चेष्टादिकं कृत्वा निष्क्रान्तः) ।। (नेपथ्ये-"पाण्ड्यमहीपालो देवी-मन्दिरसमीपमागतो वर्तते" - "मार्गमध्यवर्तिनो जना अप्रमत्ता-भवत"! "जयतु देवः पाण्ड्यभूपालः" !!)

(ततः प्रविशति पाण्ड्यमहीपालः सानुयायिवर्गः)

पाण्ड्य : अमात्य! गतमासे देव्या नूपुराभरणं केनाप्यपहृतम् ।। तातपादानां कालेऽस्मिन्देशे चोरभीतिरश्रुतपूर्वा ।। अधुना तु मद्गृहादेवापहृतं-अहो कष्टं-किं कुर्याम् ?

अमात्य : जयतु देवः ।। मयापि तदेवालोच्यते-पुररक्षका अचिरेणैव चोरमाभरणसहितमानेष्यन्ति-मास्तु चिन्ता ।।

पां : असमर्था एते पुररक्षकाः-द्रव्यनाशेन शोको नास्ति मम ।। परंतु मंगलद्रव्यनाशेन देशस्यापि हानिर्भवेदिति मे भीतिः-

अमा : तथा वक्तुं न शक्यते-(विरम्य) देशहानिस्स्यादिति भीतिश्चेत्-लोककल्याणार्थं सोमसुन्दरमन्दिरे महारुद्रयागं कुर्मः-

पां : (आत्मगतं) देशहानिचिन्ता तथा तिष्ठतु - नूपुरादर्शनदिना-दारभ्य चेयं देवी केनापि निमित्तेन कोपं प्राप्नोति ।। अयमपरो दोषः-(प्रकाशं) ज्योतिश्शास्त्रविशारदानाहूय को वा ग्रहोऽस्माकं देशस्य वा प्रातिकूल्ये वर्तत - इति विचार्यताम् । तदनन्तरं महारुद्रयागो वाऽन्यो वा परिहारः क्रियताम् ।। (अनुयायि-वर्गाभिमुखो भूत्वा) यूयं सर्वे निर्गच्छत - सायं पश्यामः ।। (अनुयायिवर्गो निष्क्रान्तः) (नेपथ्ये - "जयतु देवः" - "भवतः प्रियवार्ता मयि वर्तते" "जयतु जयतु देवः")

पां : (प्रतिनिवर्तमानं सेवकमाहूय) रेरे सेवक! यः कोऽपि द्रष्टु-कामस्समागत इति मन्ये ।। तूर्णं प्रवेशय-शुद्धान्तप्रवेशकालेऽपि दिदृक्षवः-अहो बत कष्टं राजपदवी

(ततः प्रविशति नाडिन्धमः)

नाडि : (भूमौ पतितस्सन्) जयतु जयतु देवः-प्रियवार्ताहार्ययं जनः!

पां : तूर्णमुच्यतां-का सा वार्ता ?

नाडि : महाराज! मणिमन्त्रौषधैः - दौवारिकान् निषण्णान् कृत्वा सुगुप्तमपि-मञ्जीरं योऽपहृतवान् यं च पुररक्षका अस्मिन्देशे-ऽन्विष्यन्ति, सः-मञ्जीरविक्रयार्थं मद्गृहमागतो मञ्जीरसहितो मद्गृहसमीपे वर्तते । (सगद्गदं वेपमानो वदति) श्रुत्वा देवः प्रमाणम् ।।

पां : (आत्मगतं) आभरणलाभः शुभायैव भवति-परं तु वामहस्तः खलु स्पन्दते-को वाऽनर्थः स्यात् ? (प्रकाशं) एवं वा-तथ्यं वा ? कुतो वा तव शरीरं वेपते ?

नाडि : भवतां दर्शनेन......आभरणलाभजन्यप्रमोदेन च मम हस्तपादं कम्पते - (भूमौ पुनः पतति)

पां : सेवक! पुररक्षकानाह्वय-(सेवक: पुररक्षकैस्साकमागच्छति) रे रे रक्षका:! प्रियाया नूपुराभरणं यदि तस्य वराकस्य चोरस्य निकटे स्यात्, तर्हि तस्य शिरश्छित्त्वा मञ्जीरमिहानयत-येन देव्या: कोपमप्यपनेष्यामि - सत्वरं गच्छत - (एवमुक्त्वा देवीमन्दिरं पांड्य: प्रविष्ट:)

नाडि : (सस्मितं) पुररक्षका:! मया साकमागच्छत - राज्ञ:-आज्ञां निर्वर्तयत-

पुररक्षक : कथमिदं-अविचार्यैव शिरश्छेदो विहितो राज्ञा?

नाडि : तव विचारो मास्तु! यथाज्ञप्तं तथा कुरुत - युष्माकं चिन्ता माऽस्तु ।।

अन्य:-पुर : अथकिम्। राजपरतन्त्रा वयं-यदि राजाज्ञां न निर्वर्तयाम:ां तर्हि-अस्माकमपि शिरांसि भूमौ स्यु: - एत! नाडिन्धमस्य गृहं गच्छाम: (सर्वे परिक्रामन्ति)

नाडि : इत एत-इत एत-देवमन्दिरसमीपे स वराकस्तिष्ठति-(पुन: परिक्रामन्ति)

("आगतो वा भवान्"-इति वदन् गोवल: प्रविशति)

नाडि : (जनान्तिकं) महाभाग! एते पुररक्षका राज्ञा प्रेरिता:-आभरणं स्वीकर्तुमागता: - इदं नूपुरं तेभ्य: प्रदर्शय (तस्मै प्रयच्छति-सोऽपि स्वीकरोति)

गो : (जनान्तिकं) एवं वा - तथैव करोमि (प्रकाशं) भ्रातर:! इदमाभरणं पश्यत (तेभ्य: प्रदर्शयति)

पु-र : ( आभरणं सम्यग्विलोक्य - सस्मितं ) नूनं देवीपादालं-कारयोग्यमेवेदं नूपुरं-तत्र न कोऽपि सन्देह:-परंतु-अदृष्टपूर्वत्वात्-

'इदमेव देव्या नूपुरमि'ति कथं निर्णेतुं शक्यते ? (जनान्तिकं-अन्यं नगरपालकं प्रति) भद्र! अयं जनस्तस्करो न भवतीति मन्ये ।। तस्करस्य मुखं-अस्मद्दर्शनेन वैवर्ण्यं प्राप्नोति - अयं तु - अविकृत एव वर्तते ।।

अन्यः-पुर : (जनान्तिकं) (साश्चर्यं) मयापि तदेव चिन्त्यते-भवतु स्वर्णकारं पृच्छामि (प्रकाशं) रे दुर्बुद्धे-पश्यतोहर! सामुद्रिक-लक्षणसम्पन्नोऽयं कुम्भीलको न भवति-वध्यश्च न भवति-देव्याः पादयोर्नूपुरद्वयं दूरतः-बहुवारमस्माभिर्दृष्टं-परंतु तयोरिदमेवान्य-तरदाभरणमिति केन वा प्रत्यभिज्ञातुं शक्यते ?

गो : (आत्मगतं) को वा कुम्भीलकः ? को वा वध्यः ? कस्या देव्या नूपुरम् ?

नाडि : अहो सामुद्रिकशास्त्रनैपुण्यं ! अहो चोराचोरनिर्धारण-कौशलं ! रूपलावण्ययुक्तस्तस्करो न भवतीति केयं राजाज्ञा ? (जनान्तिकं) मयोच्यते देव्या नूपुरमेवेति ।। तस्मिन्विषये विश्वासाभावस्य को हेतुः ? अहं तत्र प्रतिभूः ।

पु-र : भ्रातः! गुणागुणचिन्तनं कर्तुं नायमवसरः - यथाज्ञप्तं यदि न कुर्मः-तर्हि देवो ध्रुवं दण्डयेत् ।।

अ-पु-र : राजाज्ञप्ते विषये को विचारः? देव्या नूपुराभरणं तन्निकटे वर्तते-अतो वध्य एव ।। भूपालाज्ञा-एवं वर्तते-वयं किं कुर्मः ?

गो : (विस्मितस्सन्) को वा वध्यः ? देव्या आभरणं किं ? किमपि ज्ञातुं न शक्यते !

पु-र : (हठात्-मञ्जीरं गृहीत्वा-गोवलं कर्षन्)-एहि-अस्माभिस्साकं... सुस्थिरं स्थानं प्रयच्छामः-

गो : (सरोषं) कुत्र ? क्रयविक्रयार्थं मथुरां प्राप्तोऽयं जनः - न कोऽप्यपराधो मया कृतः ।

पु-र : ह-ह-हा-अचिरेणैव गृध्राणां महोत्सवो भविष्यति-लोकान्तरे क्रयविक्रयव्यवहारस्तव भविष्यति ।।

गो : किं - किं - किं -

पु-र : घृतसूपान्नादिसंवर्धितं चन्दनादिविचर्चितं तव शरीरं गृध्राणां खाद्यं भविष्यति-

गो : भवता किमुच्यते ? किमपि न ज्ञायते मया-

पु-र : (गोवलं शिरसि ताडयित्वा) अतिबालोऽयं-स्तनन्धयः । किमपि न जानाति-चौर्यादृते - (उच्चैः-सकोपं) रे रे चोरमणे मञ्जीर-चौर्यदण्डत्वेन तव वधो राज्ञाऽऽज्ञप्तः......

गो : किं ? अहं मञ्जीरापहर्ता ! अतश्च वध्योऽहम् !! अहो दुर्गतिः ! (उच्चैः-रोदिति) अन्तर्वत्न्या देव्या जानक्या वनवास-प्राप्तिरिव मम वधप्राप्तिः । (सगद्गदं) मां राजसमीपं नयत-नाहं तस्करः-नेदमाभरणं राजगृहादपहृतम् । नाहं वधयोग्यः-विज्ञापनायावकाशं दत्त ।। (पादयोः पतित्वा याचते) मां मुंचत मां मुंचत..... (रोदिति)

नाडि : तूर्णं राजाज्ञां निर्वर्तयत-नो चत् पलायनं कुर्यात् । जागरू-कतया वर्तितव्यम् ।।

गो : ( नाडिन्धमं प्रति ) रे विश्वासघातक ! मित्रध्रुक् !! विक्रयमिषेण मामामिषावशिष्टं करोषि-धिक्त्वां-अस्य पापस्य फलमचिरेणैव प्राप्स्यसि - निष्कृतिर्नास्त्येव तव ! (साक्रोशं वदति)

पु-र : हा-हा-(हसित्वा) पुण्यपुरुषः - चोरमहर्षिः ...शापं ददाति-! दुर्बुद्धे तूष्णीं भव-अचिरेणैव मम कृपाणस्तव रुधिरस्य स्वादिमानं ज्ञास्यति !

अ-पु-र : न केवलं कृतागः-भूनिरपि ।। कालविलम्बो मास्तु ।। हस्तबन्धनं कुरुत-ऊं-ऊं-...

गो : अहो दैवगतिः-मय्येव दोषस्स्यात् किमु ? जन्मान्तरे किमपि अकार्यं मया कृतं स्यात् । तस्येदं फलं किमु ?-अहोदैवगतिः- (रोदिति) अथवा माधव्यां दोषारोपणमेव - मयि दोषारोपण- कारणं किमु ? साऽनवद्यैव-तस्या मनःक्लेश एव - इदानीमेवं फलितं-किमु ? अहो मन्दभाग्यता-पूर्वेद्युः-तस्यां दोषो मयाऽऽ- रोपितः-अद्य ततोऽपि महत्तरो दोषो मय्यारोपितः ।। न केवलं दोषारोपणमात्रं मयि ।। दण्डोऽपि मया लब्धः-सा शुद्धैव-शुद्धैव- (पुनः पुनः-वदति)

(ततो गोवलो मूर्च्छितः पतति)

पु-र : हन्त-इदानीमेवामिषपिण्डः संवृत्तः ।। एन - एत - सूकरवद्वंशे बद्ध्वा "तत्र" नीत्वा सूकरविशसनवत् कृत्वा राजाज्ञां निर्वर्त्य गृध्राणां - आतिथ्यं सम्पादयामः । भ्रातः-नूपुर सुरक्षितं कुरु ।। राज्ञे देयं तत् - राजस्वं खलु ।।

(इति पुररक्षका गोवलेन साकं निष्क्रान्ताः)

नाडि : (कम्पमानशरीरः) (सगद्गदं) दिष्ट्या-आपन्नोऽपि रक्षितो- ऽस्मि - अचिरेणैव वैवस्वतसदनातिथिर्भवेदयं मूढः ।। देव्या मञ्जीरं विक्रीय-अचिरेणैव धनिको भवितायं जनः ।।

(सानन्दं नृत्यति)

(इति निष्क्रान्तः)

(नेपथ्ये-"हा-कृण्णकि"-"हा-हतोऽस्मि")

(गोवलस्य - आर्तिध्वनिः)

।। अष्टमोऽङ्कः ।।

## ।। नवमोऽङ्कः ।।

(नेपथ्ये)

कामं ददाति नमतां भुवि देहसौख्यं
हार्दं तमोऽपि तपतां विनिहन्ति यश्च
सोऽयं खगस्सकलकर्मनिदानभूत
आखण्डलस्य सविधे किमु वक्ति वार्ताः 1

[नेपथ्ये कलकलः - मथुरापत्तने चतुष्पथे पंचषाः पौरा भाषमाणा वर्तन्ते]

**अन्यतमः** भ्रातः! का वार्ता ? निमग्नहृदय इवाऽऽभासि-?

**अपरः** ऊं-भास्वानुदितः-तं प्रणम्येदानीमेत्रागतोऽस्मि - इमं भ्रातरं पृच्छ [अन्यं निर्दिश्य] स एव जानाति सर्वाः पत्तनवार्ताः

**तृतीयः** [विहस्य] किंचिदेव जानामि-

**प्रथमः** तदेवोच्यतां-वयं तदपि न जानीमः

**तृतीयः** पूर्वेद्युः कश्चन देशान्तरादागतो वणिक् राज्ञा व्यापादितः-

**प्रथमः** [साश्चर्यं] कथं तथोच्यते ? तादृशनीचकृत्यं महीपालोऽपि करोति किमु ?

**द्वितीयः** तथा न-"वध्योऽयं" इति राज्ञाऽऽज्ञा प्रस्तुता-साचाऽऽज्ञा पुरपालकैर्निर्वर्तिता ।। [सर्वे हसन्ति]

**प्रथमः** किमर्थं वधरूपो दण्डो विहितः ? को वापराधस्तेन कृतः ?

**तृतीयः** महिष्या मञ्जीरयुगलं केनाप्यपहृतं समीपकाले ।। "शिञ्जिनी युगलस्यापहर्ताऽयमेव वणिक् - देशान्तराभिजनः" - इति केनचिन्नाडिन्धमेन राज्ञे निवेदितम् ।। ततः किं...सर्वं समाप्तम् ।।

द्वितीय : मयाप्येवमेव श्रुतं-वस्तुतस्तु स तस्करो वा न वा? तथ्यं को वा जानाति-राज्ञा न विचारितं किमु?

चतुर्थ : "शिरश्छेत्तुं तमानय"-इति वक्तुकामेन विषयान्तरनिमग्न-हृदयेन राज्ञा-"शिरश्छित्त्वा तमानय"-इत्युक्तं स्यादिति मन्ये-ऊं-किं कुर्मः-परं तु स वणिक् व्यापादितः !

तृतीय : यदुक्तं भवता-तद्युज्यत एव! अन्यथा कथं-अविचार्यैवैवं कृतवान् सुराज* पाण्ड्यः ।। अनेन महीपालेनेयं पृथिवी राजन्वतीति सर्वे पौरा युक्तरूपं मन्वते ।।

द्वितीयः - तत्र कस्सन्देहः! अन्यच्च ।। पूर्वेद्युस्सायं ज्योतिर्विदां सदो नृपाज्ञानुसारं प्राचलत् ।।

तृतीय : एवं वा-अहमपि ज्योतिश्शास्त्रं जानामि-किं वोक्तं ज्योतिर्विद्भिः?

द्वितीय : पुरा लंकापुरदाहे खाण्डववनदाहे च यादृशो ग्रहसमावेशो बभूव तत्तुल्यो ग्रहकाल समावेशो भविष्यतीति तेषां मतिः-

चतुर्थ : किं-किं-किं......

द्वितीय : एवं-एवं-अयं कुलीरमासः-अद्य कृष्णपक्षाष्टमी भृगुवारश्च ।। कृत्तिकासु चन्द्रमाः प्रचलति-अयं योगो महापुरदाहक इति तेषां निश्चयः ।।

चतुर्थ : तावता मथुरापत्तनस्य का हानिः ?

तृतीय : तथा पृच्छ-अहं वच्मि-पाण्ड्यभूपतेर्मारकदशा प्रचलति-महिष्याश्च ।। वैधव्ययोगदायकदशाच तस्याः ।। एवं सर्वं विचिन्त्य पत्तनस्य कष्टादशेति मन्ये ।। ज्योतिर्विद्भिः किं वा निर्णीतम्?

---

* न पूजनात् पा. सू (5-4-69) इति समासान्तो न ।।

द्वितीय : एवमेव ज्योतिर्विदोऽप्यवोचन्-"राजहानिदा दशा देशस्यापि हानिदा"-इति तेषां सिद्धान्तः ।। तच्छान्तये च "अतिरुद्रयागः"-राज्ञाऽऽज्ञप्तः ।। श्वः प्रभृति प्रचलिष्यति स यागः ।।

प्रथम : अहमप्येवमेव मन्ये - अहं प्रभातकाले - "आभीरपल्लीं" अगच्छम् - तत्रत्या गोपा अपि भीतास्सन्तः - एवं भाषमाणा आसन् ।।

चतुर्थ : किं वा भाषमाणा आसन् ?

द्वितीय : ते तावत् - "भाण्डगतं पयः कृतातंचनमपि दध्यात्मना न परिणतं-महोक्षा अश्रुपूर्णलोचना वर्तन्ते । सुतप्तमपि नवनीतं विलीनं न भवति-प्रकृत्या क्रीडातत्परा अजशावका अपि निश्चेष्टा वर्तन्ते-गोकण्ठबद्धा मणयोऽप्यकस्मादेव भूमौ विकीर्णा वर्तन्ते ।। कुण्डोधो धैनुकं वित्रस्तं सत् भीमं क्रन्दति" इति भाषमाणा आसन् ।। देशविपत्तिद्योतका एते-इति तेषां महाजनानां मतिः-तच्छान्तये च यदुनन्दनाराधनमपि तैराचरितम्

प्रथम : विपन्नस्य वणिजः कलत्रं कुत्र वा वर्तते ? भर्तुर्मृतिं सा जानाति वा न वा ? अहो कष्टम् !

तृतीय :पूर्वेद्युस्सायं स गृध्रसात्कृतः ।। इतः परमेव येन केनापि तस्यै कथनीयं स्यात् ।

द्वितीय : किमर्थं वा स वणिक्स्वदेशात् देशान्तरमागतः ?

चतुर्थ : स स्वदेशे नष्टधनस्संजातः ।। पूर्वेद्युरापणवीथ्यां मया मञ्जीरहस्तस्स दृष्टः । 'मंजीरविक्रयार्थमागतोऽस्मि" इति समीपस्थिताय कस्मैचित्पुरुषाय कथितं तेन ।। अहो धर्मविपर्ययः । (नेपथ्ये-आक्रोशः-सर्वे कर्णं दत्वा श्रृण्वन्ति-"प्राणनाथ क्वासि ?" "क्व वा शरणं यामि"-आक्रोशरावः)

प्रथम : कस्या अप्यबलाया आर्तिध्वनिरिव भाति-(पुनश्च नेपथ्ये- "आगस्कृत्प्रजानाथ एव न तु मत्प्राणनाथः-"अहो बत कष्टं-विभर्तृकाहं संजाता" रोदनध्वनिः)

द्वितीयः - विपन्नस्य वणिजो जायेव भाति-प्रजानाथं निन्दति ।। भर्तुर्मरणेन दुःखितेव च भाति ।। एत तां द्रक्ष्यामः ।। किंचिदि-वाश्वासयामः-(सर्वे निष्क्रान्ताः)

।। इति विष्कम्भः ।।

(ततः प्रविशति-विकीर्णकेशा-आक्रोशन्तो कण्णकी नूपुरं दधाना)

क : (दिवाकराभिमुखी भूत्वा) उत्तुंगकल्लोलापगापतिपरिखा-मण्डिताखिलभूमण्डलसकलकर्मसाक्षिन्! तिग्मदीधिते!! त्वं ब्रूहि किं मत्प्राणनाथः पाटच्चरः? (सोरस्ताडं रोदनं करोति) त्वं समराभिमुखहतवीरकुलजाताद्राज्ञो भीतो नृपपक्षपाती स्याः ।। अतः प्रत्युत्तरं न दास्यसि-हुं-(पुना रुदित्वा) धर्मापेतः पाण्ड्य-भूपालोऽसमीक्ष्य कार्यं कृतवान्-फलं त्वहमनुभवामि-इहामुत्रसौख्य दूराहं संवृत्ता ।। (जनाभिमुखी भूत्वा) राजनीतिविमुख महीपालपालितमहापुरवासिनः! भो महाजनाः! मत्प्राणनाथः पाटच्चरो न भवति - मन्मंजीरविक्रयार्थमेव स इहागतः । चोरत्वालीकमारोप्य स युष्माभिर्मारितः । अहो धर्मापेतक्रिया! मन्मञ्जीरयुगलावशिष्टं-इदं पश्यत-आभिजात्यैकधनानां कुले जातः प्राणनाथः कथं वा चौर्यं कुर्यात्? भवतां निष्कृतिरेव नास्ति-(उच्चैः रोदनं करोति-मूर्छिता पतति-पुनश्च लब्धचेतना) अबलानां शोकदातुः-राज्यं स मूलं विनश्यति-युष्माभिस्सीतादेव्या महच्चरितं न श्रुतं वा? (विचिन्त्य) अपेतार्जवभूपतिपालित-राज्ये कुटिलदण्डनीतिभूयिष्ठे पुण्यपुराणकथाश्रवणं वा ज्ञानं

वा युष्माकं न स्यादेव - किं बहुना - अस्थानोपयुक्तकृपाणस्य धर्मार्पितस्य महाराजस्य महापुरेऽस्मिन् हालास्यनाथोऽपि वसति किमु ? वनचरलोचने त्वमपि सुप्ता किमु ? (पुनश्चाश्रूणि मुंचति) अप्रतिसमाधेयापराधको महाराजः-स एवाऽऽगस्कृत् ।। युष्मास्वाक्रोशो न युक्तः-(पुनश्च विचिन्त्य) अथवा राजन्यपि न दोषश्शङ्कनीयः ।। किं वा पापकर्म पूर्वस्मिन् जन्मनि मया कृतम्... यस्य परिपाकादियमनर्थपरम्परा समुत्पन्ना...तत्र हालास्यनाथो वा प्रजानाथो वा प्राणनाथो वा महाजनो वाऽऽक्रोशार्हो न भवति-भवतु-मत्प्राणनाथः शक्यप्रापणो न भवति-ऊं-अपराद्धं महीपालं दृष्ट्वा याथार्थ्यंनिरूपणं च कृत्वा शान्तकोपा भवामि-महाजना याथार्थ्यं पश्यत - (ततः प्रस्थिता कानिचित्पदानि गच्छति)

(नेपथ्ये)

**नष्टकोपां प्रियां बुद्ध्वा नष्टतापो महीपतिः**
**सम्प्राप्य मानसीं तुष्टिं स्वापाद्देव्यास्तु मन्दिरे 2**

**सभायां संनिविष्टोऽयं प्रजानामार्तिनाशकः**
**राजेव राजते राजा मुक्तस्स्वर्भानुबन्धनात् 3**

(वार्ता निवेदको गायति-श्रुत्वा कण्णकी) सभां प्रविष्टो राजा-राजा प्रकृत्या प्रकृतिरञ्जनः खलु-शान्तमना अपि वर्तते-तस्य पुरतस्तथ्यं निरूपयामि-(सकोपं वदति) (कानि चित्पदानि गत्वा हस्तेन निरूप्य) राजसदनं च समागतं-द्वारि दौवारिकोऽपि वर्तते- राजसदनद्वारे दौवारिकस्तिष्ठति-तत्समीपं गत्वा)

क : रे रे दौवारिक ! शेमुषीविहीनस्य पुण्यापेतचित्तस्य राजनीति-पथात्प्रच्युतस्य रे रे द्वास्स्थ ! "प्रशस्तं नूपुरं हस्ते दधाना भर्तृविहीना काचन वामा द्वार्यास्त" इति त्वन्नृपाय निवेदय-

(उच्चैर्वदति साक्रोशम्) (दौवारिको वेपमानस्ततः प्रस्थितः)
(अन्तः प्रविशति-आसनस्थो राजा सभायां देव्या साकं)

दौवारिकः : (कम्पमानः) जयतु जयतु देवः । अश्रुताभिक्रोशो महाराजश्चिरं जीवतु! देव! रुधिरासिक्तसैरिभमस्तकाधिष्ठित-चरणा शूलहस्ता दुर्गेति वा-मातृका चामुण्डेति वा-कालान्तक-नटनप्रेक्षासक्तचित्ता भद्रकालीति वा-भीकररूपा वनदुर्गेति वा निर्णेतुमशक्या कोपाक्रान्तचित्ता तपनीयनूपुरं हस्ते दधाना काचन रामा राजानं द्रष्टुकामा द्वारि तिष्ठति ।। श्रुत्वा देवः प्रमाणम् ।।

राजा : तूर्णं तामिहानय-

द्वौ : यद्देव आज्ञापयति-(निष्क्रान्तः) (बहिरागत्य कण्णकीं प्रति-) अन्तर्गच्छतु भवती-इतो गन्तव्यं-इतो गन्तव्यं (पन्थानं दर्शयति) (राजसभां प्रविश्य कण्णकी तिष्ठति)

राजा : अश्रुपूर्णलोचने! हे लताङ्गि! का त्वम्?

क : विवेकविमुख हे भूप! वच्मि - धर्मैकनिरतैर्महीपालैः पालितः प्रशस्तश्चोलदेशोऽस्माकं देशः ।। पुगार्पत्तनाभिजना वयं - आभिजात्यैकधनस्य वैश्यवर्यस्य महासाधोः पुत्रः - "गोवल" इति विश्रुतः-धनार्जनलिप्सया मथुरापुरीं प्राप्तः-अत्र च मञ्जीर-विक्रयार्थं निषद्यां प्राप्तः-।। अकस्मादेव त्वया व्यापादितः-तस्य जायां मां विद्धि - कण्णकीति मदीयं नाम - (निःश्वासान् मुञ्चति)

अमात्यः : (सकोपं) राजन्! भवन्तं 'विवेकविमुख' - इत्यामन्त्रयते ।। अस्या भर्तुः शिरश्छेदः कृतः ।। अस्यास्तु जिह्वाच्छेदनं कार्यम् ।। (आसनादुत्थितः सन् वदति)

राजा : (हस्ताभिनयं कृत्वा-अमात्यं प्रति)-मास्तु-मास्तु ।। वस्तुत एवाहं विवेकविमुखः स्याम्! तस्या अवकाशो दीयताम् ।। (अमात्य उपविशति) (कण्णकीं प्रति) ललनाललामभूते - चोरघातनं धर्मार्पितं न भवति-दण्डनीतिषु विहितं न्याय्यं धर्म्यं शिक्षणमेव - (नाडिन्धमेन कथितं गोवलस्य वृत्तान्तं तस्यै संग्रहेण कथयति)

क : अहो प्रमादः! असमीक्ष्यकारिन्! मथुरापुरपते! मत्प्राणनाथ-हस्तगतं मदीयं नूपुरं त्वया दृष्टं वा-?

राजा : वत्से - न दृष्टं - न दृष्टम्......

कण्णकी : तर्हि देव्या नूपुरमेव तन्निकटे - आसीदिति कथं निर्णीतं त्वया ? कथं वा शिक्षणं दत्तं त्वया ? प्रति ब्रूहि-

अमात्य : महाराज! इयमबला भवन्तं - अतिप्रश्नान् पृच्छति ।। अतो दण्ड्या च भवति......(सकोपं वदति-आसनादुत्थाय)

राजा : मास्तु - मास्तु - विचारणीयमेव तत्!

क : मन्मञ्जीरोत्सङ्गे शिञ्जानशकलानि माणिक्यमयानि सन्ति-... (साक्रोशं वदति)

राजा : मञ्जुभाषिणि! सम्यगभिहितं त्वया ।। अस्मन्मञ्जीरे मुक्ताफलानि सन्ति-(पार्श्वस्थान् पुररक्षिण आहूय) रे रे रक्षिणः! गोवलनिकटे स्थितं मञ्जीरमानयत! (कोशागारादाभरणं रक्षिण आनयन्ति)

राजा : वत्से-इदमेव नूपुरं तन्निकटे-आसीत् ।। (तस्यै ददाति-सा च स्वीकृत्य-विमृशति)

क : (विमृश्य) हां-इदमेव-इदमेव-राजन्-! याथार्थ्यं निरूपयामि ।। अस्योत्सङ्गे किमस्तीतीदानीं व्यक्तं भविष्यति-राजन् पश्य! (भूमौ-आविध्यति)

अमात्य : (आत्मगतं) कथं मञ्जीरश्शतधा भिन्नः। अन्तश्शकलानि सर्वतः प्रसृतानि! अहो आश्चर्यम्! माणिक्यमयान्येव सर्वाणि!!

(शकलमेकं राज्ञः पुरतोऽपि पतति)

क : पश्य! राजन्! पश्य! याथार्थ्यमवगतं वा? (साक्रोशमुच्चैः क्रन्दति)

राजा : अहो मौग्ध्यं-धवलातपत्रानर्होऽहं-हेमलवाक्यं तथ्यं मन्वानः परप्रत्ययनेयबुद्धिरहं भूपो न भवामि - अहमेव तस्करः-अहमेव तस्करः - अस्मद्वंशे राजनीतिकौटिल्यमस्मदुपज्ञमेव - धिङ्मां-हे प्राणाः! मां परित्यजत-...(वदन् सिंहासने निश्चेतनः पतति)

देवी : प्राणनाथ क्व यासि ? अहमपि त्वामनुयामि ।। (सापि भर्तृ-चरणकमलं नत्वा मूर्छिता पतति)

अमात्य : अयि वत्से! इतः परेहि - त्वया राजमिथूनं निश्चेष्टं - अचेतनं च संवृत्तम्!

(कण्णकी नूपुरं दधाना रोदनं कुर्वती ततः प्रस्थिता-राजसदने कलकलः) (नेपथ्ये - वार्तानिवेदको गायति)

**"मञ्जीरस्यापहर्ताऽयं गोवलो नात्र संशयः।"**
**इत्युक्तं स्वर्णकारेण तथ्यं मत्वा नराधिपः** 4

**गोवलं मारयामास चोरदण्डं तदेव हि**
**वस्तुतश्चोरमात्मानं बुद्ध्वा मञ्जीरभेदनात्** 5

प्राणानमुंचद्राजाद्य दिक्पालांशसमुद्भवः
द्युलोकस्थं पतिं प्राप्ता देवी च पतिदेवता 6

(श्रुत्वा-कण्णकी-मूर्च्छिता पतति)

क : (पुनश्च लब्धचेतना) अहो कष्टं-अहमपि दुष्कृतकारिणी सञ्जाता! धिङ्मां - राजमिथुनमृतिकारणभूतां - (विचिन्त्य) अथ वा मय्यपराधो न विद्यते-दुष्कर्मरतानां प्राणान् धर्मं देवतापहरिष्यतितदद्य संवृत्तम्-मय्यपराधः कथं भवेत् ? (राजसदनात् बहिरागत्य) यद्यहं पतिदेवता स्यां-तर्हि-इमां पुरीं भस्मसात्कुरु-.. (इति वदन्ती हस्तगतं नूपुरं मथुरापुरस्योपरि क्षिपति)

(नेपथ्ये-"मातः ! अहमागतोऽस्मि"-इति श्रूयते)

क : (कर्णं दत्वा) को वा मां "मातः" - इति - आमन्त्रणं करोति (नेपथ्याभिमुखी पृच्छति)

(ततः प्रविशति विप्रवेषो हुतभुक्)

विप्र : मातः! सर्वभक्षकोऽहं ..कृष्णवर्मा-!

क : देव! इयं पुरी तवैव... स्वीकुरु-

विप्र : पतिदेवते! देवगणैरप्येवमेवाऽऽज्ञप्तोऽस्मि ।। तिथिवारनक्षत्रग्रहयोगेनैवाद्येयं पुरी पूर्वमेव दग्धा - राज्ञो दुष्कर्मणा च - पुनश्च त्वत्कोपेद्धपातिव्रत्यवह्निना च ।। अहं तत्र निमित्तमात्रं भवामि ।।

क : हुताशन ! साध्वाचारान्-साध्वीः-गाः-जरठान्—स्तनंधयांश्च मा स्पृश ।। अवशिष्टं दोषसंस्पृष्टं सर्वं भस्मावशेषं कुरु! (आज्ञां दत्त्वा प्रस्थिता)

विप्र : मातस्तथैव करोमि - (तांप्रणमति) चिरकालानन्तरं मम जठरपूरणं भविष्यति-(उदरं परिमृजन् सामोदं नृत्यति)

(इति निष्क्रान्तः)

(नेपथ्ये-पलायनपराणां श्लोकाः श्रूयन्ते)

हालास्यनाथात् किमु नेत्रजातो
हालाहलो वा किमु कण्ठजातः ।
वैश्वानरः किं चरतीह पुर्यां
कीशध्वजासक्तसखित्वपाशः - 7

पुरा हि लंकां दशकण्ठभुक्तां
ददाह सूनुर्मरुतां कपीन्द्रः -
विदेहकन्याहृदयाग्रशोकः-
निदानमासीत्खलु तत्र नूनम् ।। 8

तथैव नूनं मथुरापि दग्धा
निदानमत्रापि च कण्णकीशुक् ।
कृतं हि पापं विबुधेन राज्ञा
फलं तु भुङ्क्ते पुरि पौरवर्गः 9

(नेपथ्ये कलकलः-जनसम्मर्दध्वनिः - हा - हा - ध्वनिः-"अंहो-कल्पान्तदहनः किमागतोऽत्र" - "हुं - सा पतिदेवतैव कारण मस्यानर्थस्य" - "न - न - नाडिन्धम एव" - "न - न - न - ग्रहयोगविशेष एव कारणम्" एवमादयो ध्वनयः-...क्रमेण च विरताः-नेपथ्ये—

"रक्षकः खलु सर्वेषां राजा धर्मपरो यथा
भक्षको जायते नूनं राजाऽधर्मपरस्तथा 10

तदद्य संवृत्तं" - अन्यो ध्वनिः ।।

"वनचरलोचने-! जगन्मातः! करुणाराशे!! त्वामेव शरणं प्रपन्नाः स्मः । सर्वदा त्वमेव रक्षित्री"-स्त्रीणां ध्वनिः)

।। नवमोऽङ्कः ।।

## ।। दशमोऽङ्कः ।।

(नेपथ्ये)

देव्यास्सिहं द्विरदवदनो मार्ष्टि चाखुं स्ववाहं
स्कन्दो यस्मिन् विहरति गिरौ बर्हिणा बालभावात्
नन्दी यस्मिन् हरहृतमना वप्रलीलां तनोति
शंभुस्साम्बो वसति सततं यत्र सोयं महाद्रिः ।। 1

'नारायण"-"नारायण"-"नारायण" (तदनुवीणावादनध्वनिः) "गिरिपते" - "गिरिजापते" - "गिरिवासिन् - "गिरिधन्वन्"- प्रणतोऽस्मि! (पुनर्वीणाध्वनिः) "क आगतः? महतीवादन ध्वनिरिव भाति-नारद आगतः किमु?")

(ततः प्रविशतः कैलासशिखरस्थः-गिरिजया सहासीनो महादेवः शूलपाणिः-नारदश्च)

महादेव : नारद! स्वागतं ते! (आत्मगतं) अस्यागमनं मुधा न भवति ।। (प्रकाशं) का वार्ताऽऽनीता भवता? कुतः प्रत्याग तो भवान्?

नारद : देव एव सर्वं जानाति! सर्वेषां भवानेवान्तरात्मा!! (हि-हि-हि-हसति)

गिरिजादेवी नारद! अपि सर्वे कुशलिनः? देवलोके मर्त्यलोके अन्यत्र च...

नारद : देवि! किं वक्ष्यामि...(विरम्य) मातः! कृत्स्नापि मथुरापुरी भस्मसात्कृता...

गि-दे किं जनकगेहे प्रविष्टदेह आश्रयाशः-? हा-हतास्मि-(आश्रूणि मुंचति)

महादेवः - नारद! तवागमनकार्यं निर्वृत्तप्रायमिति मन्ये-

नारद : न-न- तथा न मन्तव्यम्...

महादेव : तर्हि... अवशिष्टकार्यजातमपि वर्तते वा? (सकोपं पृच्छति)

नारदः - (प्रणमति) महादेव! भवतां दर्शनार्थमेवाऽऽगतोऽयं जनः-।। यत्संवृत्तं भूलोके तदेव मया निवेदितं...देव्याऽविदितमप्यस्ति वा? अनुज्ञा दीयतां-मया प्रस्थीयते-(पुनः प्रणमति)

(ततो महतीं वादयन् प्रस्थितः)

महादेव : देवि! (चुबुके गृहीत्वा) समाश्वसिहि-अश्रुमोक्षो मास्तु!

गि-दे देव! कोऽयं लीलाविनोदो भवताम्? पुरा त्रिपुरदाहः- अधुना मथुरापुरदाहः-! केयमग्निक्रीडा? अर्धशरीरभाजा मयाऽप्यविदितं किंचिदाचरितमिव भवद्भिः...(विरम्य) को वा-पराधः पाण्ड्येन कृतः? भवान्तरे खलु दक्षप्रजापतिर्भवतां श्वशुरः- यस्य च भवत्सु प्रद्वेषो महान्! भवतामपि श्वशुरे प्रद्वेषो वा?

स्यान्नाम । तादृशप्रद्वेषोऽप्यशान्तः किमु? यतो भवान्तरे श्वशुरभूतस्यापि पाण्ड्यस्य श्वशुरत्वमात्रसाम्यमवलंब्य-ईदृशं शिक्षणं प्रवृत्तम्...

महादेव : (विहस्य) देवि! वनचरलोचने! कामचारो मयि नैव शंकनीयः- कारुण्यनैर्घृण्ये अपि न संभवतः । (देव्या अश्रुपरि-मार्जनं कुर्वन्) करुणार्द्रहृदयायास्तवाश्रुबिन्दुः पाण्ड्यदेशे तीव्रज्वालाशमनमहावृष्टिपातो भविष्यति (हस्तसंचारं कुर्वन्) देवि-भूलोकं पश्य !

गि-दे (अधो विलोक्य) महती वृष्टिः! देवदेव केयं लीला भवतां? अग्निक्रीडामनु सलिलक्रीडा प्रवृत्ता किमु? भवच्चित्तस्थिरवा-सिन्या मयापि ज्ञातुमशक्या भवतां लीलाविशेषाः ।।

महादेव : देवि! त्वयाऽविदितं न किमप्यस्ति !
एहि! महेन्द्रसभां द्रक्ष्याव: ।

(इति प्रस्थितौ)

**स्वर्गंगामलतोयतोषिततनुः श्रीकामधेनुश्शिवा**
**स्वेच्छासंचरवायुतुल्यगतिकक्षीराब्धिजन्मा हयः ।**
**माहेन्द्रश्च चतूरदस्सितवपुः पीयूषघासो द्विपः**
**राजन्ते दिविषत्पुरे सुरवरस्त्रीसंघसंशोभिते ।।** 2

(नाट्येनावतीर्य-प्रविशतो जगत्पितरौ)

गि-दे देव! चिरकालानन्तरं महेन्द्रपुरीं पश्यामि-अतिशोभते पुरी-

महादेव : देवि! तव चित्तविनोदार्थमेव त्वामत्रानीतवानहम् ।। तत्र पश्य! सुधर्मा प्रचलति!

गि-दे देव! अत्रैव स्थित्वा स्वर्गंगापातादिप्रकृतिशोभां देवसभां च द्रक्ष्याव: ।

महादेव : यथा तुभ्यं रोचते ।। (अन्तर्धानं प्राप्नुत:)

(तत: प्रविशति दिव्यासनस्थो महेन्द्रः ।। अन्ये च सभ्या आसनस्था:)

महेन्द्र : वाचस्पते! अमात्यवर्य! को वा विशेष:?

वाचस्पति : (सस्मितं) देवराजाऽविदितं किमप्यस्ति वा?

म. गुरो! शब्दशास्त्रे कश्चन सन्देह:....

वा. (विहस्य-आत्मगतं) दिव्यवर्षसहस्राध्ययनानन्तरमपि सन्देह:-शब्दशास्त्रे! (प्रकाशं) किमिव? भवतैव खलु व्याकृता वाक् ! अत एव च-"ऐन्द्रव्याकरणमि"ति सर्वलोकप्रसिद्धा समाख्यापि व्याकरणशास्त्रस्य!

म. तथापि सन्देहः (विहस्य) प्रथमपुरुषप्रयोगे भाव्ये मध्यमपुरुष-प्रयोगस्संभवति वा?

वा. (उच्चैः-हसति) देव! न क्वापि संभवति! विपरीतोऽयं प्रयोगः। मध्यमपुरुषप्रयोगस्थाने वैधः प्रथमपुरुषप्रयोगः-क्वचिद्भवति-यथा-',त्वं गच्छ" "भवान् गच्छतु"—इति ।। अयं च प्रयोगश्शास्त्रसम्मतः ।। भवदुक्तव्यत्ययप्रयोगो नैव संभवति"

म: भवता तथा न वक्तव्यं; उपनिषद्वाक्ये-"जायस्व" "म्रियस्व"-इति प्रयोगो वर्तते ।। तत्र मध्यमपुरुषत्वं न संभवति-आमन्त्रितपदाऽश्रवणात् ।। प्रथमपुरुषत्वमेवोपवर्ण्यते भवदादिभिः ।

सभ्यः कश्चन : (उत्थाय) छान्दसत्वात्-व्यत्ययोऽपि साधुरेव-"कर्णै" रिति भाव्ये "कर्णेभि"रितिवत्!

(सभ्यास्सर्वे हसन्ति)

म : (हासो मास्त्वित्यर्थे-हस्ताभिनयं कृत्वा) तथा न समाधातव्यं; सति संभवे छान्दसत्वं न कल्पनीयं ।। अमात्यवर्याणामाशयः कः? (अमात्याभिमुखः पृच्छति)

वा : तत्र मध्यमपुरुषप्रयोगो न विद्यते !

इन्द्राणी : कथं श्रूयमाणो मध्यमपुरुषप्रयोगः शपथेन निवार्यतेऽमात्यवर्यैः !!

वा : (विहस्य) वच्मि! वच्मि! तत्र क्रियासमभिहारविशिष्टक्रियाऽऽवृत्तौ वा क्रियासमुच्चयविवक्षायां वा सर्वपुरुषसर्ववचनसाधारणः स्वप्रत्ययो बोध्यः ।। तथाच-पापरतस्सोपाधिको जीवः पुनः पुनः 'जायते'-'म्रियते'-इति तस्यार्थः ।। अथवा ।। 'जननमरणक्रियासमुच्चयव्याप्तः सोपाधिको जीवः'-इति वा वाक्यार्थः । मध्यमपुरुषत्वं तु न संभवति ।। पाणिनिराचार्यः किं वा मन्यते? (समीपस्थं पाणिनिं पश्यति)

पाणिनि : (उत्थाय) वाक्पतिव्याख्यातेऽर्थे मम वा पूज्यपतञ्जलेर्वा (समीपस्थं पतञ्जलिं हस्तेन निर्दिश्य) चोद्यता नास्ति!

पतञ्जलि : (आसनादुत्थाय सस्मितं) ओमिति ब्रूमः ।

म : तर्हि "जायस्व" "म्रियस्व"-इति मध्यमपुरुषप्रयोगो न भवति... एवमेव खलु !

वा : नूनं तथैव !

म. एवं च नित्यस्यापि जीवस्य सोपाधिकत्वमूलकस्वकर्मनिदान-कमेव जननमरणसंभवकथनं...(विरम्य) तथा च जीवतत्त्व विचारः संवृत्तः! न तु शाब्दविचारः !

पाणिनि : अथकिम् ! (दौवारिकः प्रविशति)

दौवारिक : जयतु जयतु देवः! (प्रणमति)

म : दौवारिक! चत्वारस्समागताः किमु...तूर्णमानय तान्...(सत्वरं वदति)

दौ : (आत्मगतं) देवस्स्वयमेव जानाति ।। (प्रकाशं) यद्देव आज्ञा-पयति! (इति निष्क्रान्तः)
(ततो दौवारिको मिथुनद्वयं प्रवेशयति)

दौ : देव! आगन्तुका एते ! (दौवारिको निष्क्रामति)

म : (सभ्यान् प्रति) (तान् निर्दिश्य) इदं पाण्ड्यदेशादागतं राज-मिथुनं-इदं च वणिक्कुलजातं चोलदेशमिथुनं...(पाण्ड्यभूपतिं प्रति) स्वागतं ते भूपते! (गोवलं प्रति) स्वागतं ते गोवल! (आगन्तुकाः प्रणमन्ति)

म : अयि कण्णकि! पाण्ड्यभूपतौ तव प्रकोपः शान्तो वा ?

क: (आश्रूणि मुंचति) न-न-न-(निःश्वासान् मुंचति)

म: समाश्वसिहि-वत्से! जन्मान्तरे तव भर्ता सिंहपुरे "भरत" इति विश्रुतो राजकिंकर आसीत् ।। स भरतः कपिलपुरादागतं संगमनामकं वैश्यं सिंहपुरे धनलिप्सया निश्चयासु-आभरणविक्रयार्थं संचरन्तं, "कपिलदेशादागतोऽयं चारः"...इति सिंहपुरनृपतये न्यवेदयत-सिंहपुरनृपोऽपि-'तर्हि वध्योऽयं' चारः-इत्याज्ञां ददौ-आज्ञा च निर्वर्तिता-संगमजाया च "मत्पतिमारणकारणभूत एवमेव भवान्तरे पंचत्वं प्राप्नोतु - तज्जायाऽपि - शोकपरिप्लुना भवतु" - इनि शशाप ।। वत्से तच्छापानुमारं राजकिंकरो 'भरतः'-'गोवलो' जातः। एवं च पाण्ड्यभूपतौ प्रद्वेषो मास्तु ।। वत्स! गोवल! तव दुष्कृत्यमिदानीं स्मरसि ?

गो: स्मरामि-स्मरामि-(अश्रूणि मुंचति) (अपवार्य - कण्णकीं प्रति) प्रिये! न केवलं जन्मान्तरकृतकर्मजालप्रबोधःसंजात इदानीं ।। अपि तु अस्मदीयानां मर्त्यलोकगतानां शुद्धाऽशुद्धताऽपि ज्ञाता (पुनरश्रूणि मुंचति) अधुना निश्शंकं ज्ञायते माधवी वारवनिता-कुलजाताऽपि शुद्धैवेति-दोषगन्धरहिता चेति (अश्रूणि मुंचति)

क: (अपवार्यैव) तत्सर्वमिदानीमत्र मास्तु...

वा: (आत्मगतं) यतोऽयं पुनः पुनर्जातः - तत एव "जायस्व" "म्रियस्व"-इति-उपनिषद्वाक्यविचारः प्रस्तुतः स्वामिना-... साकूतगर्भोऽयं विचारः - (प्रकाशं) देवराज! अधुना ज्ञायते भवत्प्रस्तुतशाब्दविचारकारणम् !! (सविस्मयं वदति)

म: (अमात्याभिमुखो विहस्य-गोवलं प्रति) गोवल! समाश्वसिहि-दुष्कृतोत्थफलं-अनुभवैकशाम्यं-तत्र गत्यन्तरं नास्ति! पाण्ड्य-भूपते! कुतो वाऽविचार्यैव त्वया गोवले वधदण्डो दत्तः ?

**पाण्ड्य :** (अश्रूणि मुंचति) तदा देवो निमग्नचित्तोऽहं-मत्तोऽहं-अतोऽहं वधदण्डं जगद...

**पतंजलि :** सम्यगुक्तं-अत एव जगदेति-लिटि-उत्तपपुरुषप्रयोगोऽप्यधुना कृतः-अत एव च शिरश्छेत्तुमिति तुमुलन्तं प्रयोक्तुकामेन शिरश्छित्वेति त्वान्तः प्रयुक्तः ।। एवमेव खलु...

**पाण्ड्य :** (सलज्जं-अञ्जलिं बद्ध्वा) एवमेव ।।

**पाण्ड्य महिषी** (जनान्तिकं) कारणान्तरमेव खलु वक्तव्यं ।। अतीव लज्जिताऽस्मि...

**पाण्ड्य :** (अपवार्य) मर्त्यलोकेऽपि सत्येतरं नैव भाषितं मया कदापि-ऋते राज्यपालनकारणात् । तादृशोऽहं देवलोके कथं-अतथ्यं-स्वविषय एव ब्रूयाम्? (साकूतं वदति)

**म :** त्वदुक्तकारणं निमित्तमात्रं-निदानं तु गोवलेन जन्मान्तरे कृतं दुष्कर्मैव-ग्रहयोगोऽपि तत्र कारणम् (पाण्ड्यं प्रति-वदति)

(सभायां सर्वतो दृष्टिं प्रसार्य) (आत्मगतं) कथं जातवेदा नैव प्रत्यागतः? दाहशान्त्यर्थं मथुरां प्रेषितो वरुणदेवः प्रत्यागतः (प्रकाशं) वैश्वानरो नैव प्रत्यागतः किमु? (अधोऽवलोक्य) वरुण! त्वया कृत्स्नापि मथुरा न सिक्ता किमु? ......

**वरुण :** तत्र कस्सन्देहः? भवदाज्ञानुसारं कृत्स्ना मथुरा पुरी मया सिक्ता-परं तु मत्सेचनात् प्रागेव तत्र जलप्रवाहो बभूव ।।

**म :** कथं? भवतु-तथा सति कथं पुनर्धूमलेखाऽस्मल्लोकपर्यन्ता दृश्यते?

**वाचस्पति :** देव! मथुरायां यज्वानोऽन्ये च साधवः-क्षामवत्यादिकं शान्तिकर्म कुर्वन्ति ।। तत्र हवींषि भुङ्क्ते धनंजयः ।। भुनक्ति

चास्मदर्थे ।। अचिरेणैव प्रत्यागन्ता हविर्भिस्साकम्-(नेपथ्ये-"जयतु जयतु देवदेवः"-"अहमागतोऽस्मि") नूनं स्वाहाजानिरागतः ।।

[ततः प्रविशति तुन्दपरिमार्जोऽग्निदेवः]

म : आगम्यतां-आगम्यतां-विलंबस्य कारणमिदानीमेव ज्ञातं; अस्माकं किंचिदपि नानीतं वा?

अग्नि : देवदेव! मथुरापुरेणैव पूर्णं जातं ममोदरं; तथापि क्षामवत्यादिषु भुक्तं हविः कण्ठपर्यंतं व्यापृनं ..यदि कृत्स्नमपि शरीरमुदरमेवाभविष्यत्-तर्हि शोभनमभविष्यत्...

म : तदा-अस्माकं किमपि न स्यात्...भवतु-हवींषि कुतो वा नानीतानि?

अग्नि : देवराज! हवींषि शकटेष्वागच्छन्ति-एकेनानेतुं न शक्यानि हस्ताभ्यामपि...नापि शिरसावोढुं शक्यानि-

वाचस्पति : विलम्बेनैव ज्ञातं बहुहविरागच्छतीति-

म : तदनन्तरं... (विरम्य] अमात्य-कार्यजातं किमप्यस्ति वा?

वाचस्पति : अस्माभिर्वक्तव्यं वा [विहस्य वदति]

म : तर्हि सभा विरमतु-[आसनादुत्थितः]

गो : अस्माकं कुत्र स्थितिः?

म : अत्रैव-तत्र कस्सन्देहः? [सस्मेरं प्रतिवदति]

कश्चन सभ्यः [उत्थाय] देवराज! तथा कर्तुं न शक्यते । कथं पापकृतामपि-'अत्र'-वसतिरङ्गीक्रियते? "पापदूरोयं लोक" इति हि शास्त्रमतिः ।

म : [पुनरुपविश्य] [सभ्यं प्रति] महाभाग! ते निवसन्तु नामको दोष:?

सभ्य : वक्ष्याम:-अयं गोवलो वेश्यालोल आसीत् ।। दारांश्च परित्यक्तवान्...चिरकालम् ।। तस्य स्वर्गलोकप्राप्ति: शास्त्र-विरुद्धा खलु!

वाचस्पति : [आत्मगतं] अस्माकप्येवमेव स्फुरति ।

महेन्द्र : एव वा-ततस्तत:-

सभ्य : अन्यच्च-पाण्ड्यभूपतेरपि स्वर्गलोकवसतिर्न समीचीना–

वाचस्पति : कथं?

सभ्य : उच्यते–'राज्यान्ते नरकप्राप्ति:'–इति धर्मज्ञसमयो मनुते-

वाचस्पति : प्रायिकं खलु तत्...

सभ्य : स्यान्नाम-पाण्ड्यभूपतिविषये तावत्-नरकप्राप्तिरनिवार्या ।। अविचार्यैवानेन स्तेनदण्ड:– अस्तेने-विहित: ।। कथं तादृशभूपते-रत्र वसतिरस्माभिस्साकम्? एवमङ्गीक्रियमाणे सर्वेऽपि पाप-कृतोऽत्रागच्छिन्ति ।। कालक्रमेण पापैराक्रान्ते नाके-अस्मदादीनां स्पन्दनावकाशोऽपि न स्यात् ।। नाको नरको भवेत्! [सर्वे हसन्ति]

महेन्द्र : सम्यक्पृष्टं-सम्यक्पृष्टं-तत्र प्रतिब्रूम: ।। (अमात्यं पश्यति)

वाचस्पति : [देवराजाभिप्रायं ज्ञात्वा] देवराजाज्ञायां दोषकल्पन -मेव दोषावहं... प्रतिवचनस्यावकाश एव नास्ति ।

महेन्द्र : अमात्य! तथा न वक्तव्यम् ।। तत्र प्रत्युत्तरं दीयते– [परिषदभिमुखो भूत्वा] आचार्य: पराशर: किं वा मन्यतेऽस्मिन् विषये?

**पराशर :** [उत्थाय] देवराज! वधरूपोत्तमदण्डः साधुमारणजन्य-महापातकमपि व्यपोहति ।। तादृशदण्डो गोवलेन प्राप्तः ।। तेन कृत्स्नमप्येनः–तस्मिन् दग्धम् ।। अतोऽत्र वसतिमर्हत्येव ।।

**सभ्य :** पाण्ड्यभूपतिविषये कथं? (साक्रोशं पृच्छति)

**पराशर :** तत्रापि हेतुरस्ति ।। स्वकृतं दुष्कृतं विज्ञाय पाण्ड्यभूपेन पश्चात्तापो दर्शितः ।। पश्चात्तापेन पापशुद्धिश्शास्त्रसम्मता खलु! न केवलं मानसं तापमात्रं, परंतु प्राणत्यागोऽपि कृतस्तेन ।। गोवलमारणेन कुटिलीभूता राजनीतिः महीपालप्राणोत्क्रमणेन पुनरपि प्राप्तार्जवा जाता ।। अपि च ।। पाण्ड्यमहिष्या-अनुमरणमप्याचरितं-तेनाप्ययं पूतस्संजातः ।। किंच । पातिव्रत्यैकतपोधने एते कुलांगने! (हस्तेन कण्णकीं पाण्डयमहिषीं-च निर्दिशति] अतः सर्वेषु लोकेषु सर्वैरपि सर्वदा वन्दनीये अर्हणीये [सांजलिर्वदति] तथाच सर्वेऽप्येते स्वर्गमर्हन्त्येव ! [सर्वे हस्तताडं कुर्वन्ति]

[नेपथ्ये-"नूनं तथैव-तत्र कस्सन्देहः" सर्वे विस्मिताः पश्यन्ति] [ततोऽवतरति साम्बश्शूलपाणिः ।। सर्वे-आसनादुत्तिष्ठन्ति]

**महेन्द्र :** (ससम्भ्रममुत्थाय - महादेवस्य पादयोः पतति) महादेव! स्वागतं-स्वागतं! सुदिनमेतत् !

**महादेव :** कुलिशिन्! कुशली वर्तसे?

**महेन्द्र :** भवत्प्रसादात् कुशली कुलिशी च ।।

(पुनः प्रणमति)

**महादेव :** इन्द्र! तव सभां द्रष्टुमागतोऽस्मि ।

**महेन्द्र :** मम भाग्यातिशय एव तत्र निदानम् ।।

महादेव : महान् विचारः प्रचलतीति मन्ये ।

म : महादेव! भवताऽविदितं नास्ति खलु

महादेव : (सस्मितं-गोवलादीन् निर्दिश्य) महेन्द्र! एते पुण्यकृत एव! अत्रैव निवसन्तु ।। यदि तव लोके नास्त्यवकाशः—र्तहि कैलासे निवसन्तु । (सर्वे विस्मिताः पश्यन्ति)

[गोवलादयो महादेवं प्रणमन्ति]

महादेव : कण्णकि! चिरकालानन्तरं मुदितासि । गोवलेन साकं स्वच्छन्दं विहर । अत्र माधवीलतापि नास्ति... [सर्वेहसन्ति]

कि : महादेव! तव प्रसाद एव ।

ग-दे : पाण्ड्यभूपते! तात! नन्दनाभ्यन्तरेपु स्वेच्छं संचर!

महादेव : एवं-एवं-अत्र नन्दनाभ्यन्तरे नाडिन्धमतुल्याः खल-भुजंगा नैव सन्ति! (सर्वे हसन्ति पुनः) देवि! सर्वंमवदातं संवृत्तम्। ततः किम् !

गो : महादेव तथापीदमस्तु [भरतवाक्यम्]

**वृष्टिस्सस्यानुकूला भवतु शुभकरी मर्त्यलोके नराणाम्**
**पृथ्वीपालाश्च धर्म्यास्सुकरकरचया राज्यभारं वहन्तु ।**
**लोकास्सर्वेऽपि शुद्धा नियमितखकुलास्साधुकार्ये यतेरन्**
**क्षेमो भूमा च भूयादधिगृहमवनौ देवदेवप्रसादात् ।। 3**

।। दशमोऽङ्कः ।।

इतिशम्

## ALTERNATE READINGS SUGGESTED

| Page | Line | Reading Printed | Suggested Reading |
|---|---|---|---|
| 1 | नान्दी | (वृष्टिश्च) | |
| | 3rd line | संवर्धंते | संसेवते |
| 11 | Verse 4 | (स्मरः) | (अनघे) |
| | | बाधते | बाधसे |
| 17 | 6 | मिलित्वा गच्छावः | युगपत् गच्छावः |
| 23 | 17 | कृतवती | करोति |
| 40 | Verse 3 | दानवा | राक्षसा |

# शुद्धाशुद्धपत्रिका

# ERRATA

| Page | Line | अशुद्धं | शुद्धं |
|---|---|---|---|
| vi | 25 | ऊर्वंशी... | उर्वंशी |
| vii | 3 | गुणग्रहण | गुणग्रहणं |
| | 8 | ...समुदायस्थिति | समुदायस्थिति |
| | 11 | द्वितोयेंऽके | द्वितीयेंऽके |
| | 12 | किंतु | किंतु |
| | 21 | Page 24 | (Page 24) |
| viii | 18 | ...उत्तरभरारत... | ...उत्तरभारत... |
| x | 7 | श्लो 300 | श्लो 330 |
| xiv | 11 | tells us the | tells us of the |
| xv | 23 | desperable | desperate |
| | 27 | mush | much |
| xvi | 2 | become | became |
| | 30 | of the fate | of fate |
| xvii | 3 | i.e. hero's | i.e. the hero's |
| | 10 | exchange | the exchange |
| xxi | 1 | inhocent | innocent |
| | 7 | next morning | the next morning |

| Page | Line | अशुद्धं | शुद्धं |
|---|---|---|---|
| xxvi | 20 | were talking | are talking |
| xxix | 19 | in previous | in the previous |
| xxxii | 14 | वसन्नमाला | वसन्तमाला |
| | | नाशमाप्नुवन् | नाशमाप्नुवन् |
| 2 | 14 | ...सौमयाजिन: | ...सोमयाजिन: |
| | 17 | बह्व: ।। | वह्व: कवय: |
| | 17 | ऋपितुल्य: | ऋषितुल्य: |
| 6 | 18 | एत दृशो | एतादृशो |
| 12 | 4 | तेषांप्रसाधनतृष्णा | तेषांजनानां प्रसाधनतृष्णा |
| 16 | 11 | प्रविष्टम् (Verse 14) | प्रविष्टम् |
| 23 | 7 | ...रङ्गस्थस्लं ? | ...रङ्गस्थलं; |
| 26 | 17 | व. मा | म-ग्री |
| | 20 | म-ग्री | व-मा |
| 27 | 17 | मेब | मेव |
| 30 | 1 | अन्यतरस्थ | अन्यतरस्य |
| 30 | 19 | ...नुष्ठोयते | अनुष्ठीयते |
| | 21 | प्रष्यन्ताम् | प्रेष्यन्ताम् |
| 35 | 8 | अय | अयं |
| 36 | 5 | देवन्तिकया पुनः | देवन्तिकया सह पुनः |

| Page | Line | अशुद्धं | शुद्धं |
|---|---|---|---|
| 39 | 1 | वर्तंत ति | वर्तंत इति |
| 42 | 14 | पत्तने न कोऽपि | यत्तने यः कोऽपि |
| 45 | 1 | तब | तव |
| 46 | 13 | शंरीरे | शरीरे |
| 47 | 3 | श्वेतसवामी | श्वेतस्वामी |
| 48 | 20 | कन्याः | कन्या |
| 49 | 1 | न-न-क्रीडमानो | न-न-संक्रीडमानो |
| 54 | 19 | पतिभक्ति !! | पतिभक्तिः !! |
| 58 | 11 | ...नुवततें | ...नुवर्तंते |
| 62 | 11 | सगदगदं | सगद्गदं |
| | 11 | ...वन्धो | बन्धो |
| | 13 | जनंससेवनं | जनसंसेवनं |
| | 14 | तन्वग्या | तन्वंग्या |
| | 20 | दृष्ट | दृष्टः |
| 63 | 2 | प्रत्यागमन | प्रत्यागमनं |
| 64 | 2 | मदीयं 'चेतः । | 'मदीयं चेतः, |
| | 6 | पापभीरूश्च | पापभीरुश्च |
| 66 | 3 | आहूय | आह्वय ।। |
| 67 | 11 | निर्वंर्तयामःां | निर्वर्तयामः— |

| Page | Line | अशुद्धं | शुद्धं |
|---|---|---|---|
| 70 | 6 | क्रिर्मपि | किमपि |
| | 17 | नूपुर | नूपुरं |
| 71 | 8 | वागनोऽसि | वागतोऽलि |
| 72 | 7 | सुराज पाण्ड्य: | सुराजा पाण्ड्य: (पृथक्पदम्) |
| | 9 | सन्देदृ: | सन्देह: |
| | 12 | ज्योतिविर्द्भि: | ज्योतिर्विद्भि: |
| | 22 | किं वा | किंवा |
| 75 | 20 | वर्तंते-राज-सदनद्वारे... | वर्तंते । (राजसदनद्वारे...... । |
| 78 | 15 | इत परेहि | इत: परेहि |
| 81 | 6 | धन्बन् | धन्वन् |
| | 16 | क्रुशलिन: | कुशलिन: |
| 85 | 12 | सत्बरं | सत्वरं |
| 87 | 10 | ऋृते | ऋते |

प्रायेण सामग्र्यविधौ गुणानां ।
पराङ्मुखी विश्वसृजः प्रवृत्तिः ।।

—कालिदासः

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
काली ह्ययं निरवधिर्विपुला च पृथ्वी ।।

—भवभूतिः

प्रकाशदोषप्रचुरेऽप्यमुष्मिन्
ग्रन्थे मदीये करुणानुबन्धात् ।
प्रसादवन्तो न कृशानवन्तु
परन्तु विश्वावसवन्तु सन्तः ।।

(कृशानुः-दोषज्ञः-विश्वावसुः-गुणज्ञः)

—विश्वगुणादर्शचम्पूः